रामानंद सागर कृत

# रामायण

## चित्र-कथा

१२ विभागों में । हिंदी और अंग्रेज़ी में ।




प्रति विभाग का मूल्य ५ रुपये



चन्दामामा
विजया कम्बाइन्स
१८८, एन्.एस्.के. मार्ग, वडपलनी,
मद्रास ६०० ०२६ द्वारा प्रकाशित

अनुमति प्राप्त



सागर एन्टरप्राइजस्
नटराज स्टुडिओज, १९४ अंधेरी कुर्ला रोड, मुंबई-४०० ०६९.



ग्रंथ-क्रमांक २ अब समाचारपत्र-विक्रेताओं के पास उपलब्ध

कविहृदयम्–

# सरलं कार्याकार्यसूत्रम्

**यत्कर्म कुर्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।**
**तत् प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्॥**

"यस्य कार्यस्य करणेन अन्तरात्मनः सन्तोषः भवति तादृशं कार्यं करणीयम्। यस्य करणेन अन्तरङ्गस्य खेदः भवेत् तादृशं कार्यं न करणीयम्।"

कार्यस्य फलाफलं वयं पूर्वम् एव ज्ञातुं न शक्नुमः। अतः किं कार्यं करणीयं, किं च न करणीयम् इत्यत्र अस्माकं सदापि सन्देहः एव। एतादृशे सन्दर्भे कथं व्यवहारः भवेत् इति उपरितनः श्लोकः उपदिशति। 'अन्तरङ्गं यत् अङ्गीकरोति तत् करोतु। यत् न अङ्गीकरोति तत् मा करोतु' इति कार्याकार्यस्य सरलं सूत्रम्।

शरीरं मनः च सदापि भोगपक्षपाति। अतः तदुभयं, यतः सुखस्य भोगस्य वा लाभः तादृशं करोतु इति उपदिशेत्। किन्तु अन्तरङ्गं सदापि योग्यं मार्गम् उपदिशति। यतः तत् हितपक्षपाति। इदानीं लोके बहवः अन्तःसाक्षि अन्तरङ्गं धिक्कृत्य व्यवहरन्ति। अतः स्वेच्छावृत्त्या व्यवहरन्तः अपि ते लज्जां न अनुभवन्ति। 'त्यक्तलज्जः सुखी भवेत्' इति हि तेषां मन्त्रः।

यस्य जीवने अन्तरङ्गं प्रधानं सः सज्जनः भवति एव। यतः अन्तरङ्गं धर्ममार्गम् एव आश्रित्य व्यवहरति। तत् तं पापात् निवारयति, हिताय योजयते-सन्मित्रम् इव। यस्य जीवने मनसः एव प्राबल्यं सः नीतिमान् भवेत् एव इति न निश्चयः। मनः तु विविधैः तर्कैः विविधैः बाह्यप्रमाणैः च मानवं प्रेरयति। तादृशे सन्दर्भे मार्गामार्गविवेचनं गौणं भवति। अतः चारित्र्यभ्रंशः अनायासेन भवितुम् अर्हति।

अतः मित्राणि! अस्माकं जीवने अन्तरङ्गं प्रमाणं भवतु। वयं कदापि धर्ममार्गात् च्युताः न स्याम।

जिज्ञासा –

# पुराणम् इत्येव न साधु सर्वम्

शिष्यः- श्रीमन्! 'जि'धातुः परस्मैपदी खलु?

आचार्यः- आम्। जिधातुद्वयम् अस्ति– जि-जये, जि-अभिभवे चेति। तदुभयम् अपि परस्मैपदि एव।

शि - तदुभयम् अपि आत्मनेपदि उभयपदि वा न खलु?

आ - तयोः परस्मैपदित्वम् एव इत्यत्र सन्देहः एव नास्ति।

शि - एवं तर्हि 'जयते' इति प्रयोगः कृतः चेत् दोषाय एव खलु?

आ - निश्चयेन।

शि - तर्हि 'सत्यमेव जयते' इति वाक्यं किं शुद्धम्?

आ - एतदर्थं वा भवतः एतावन्तः प्रश्नाः? भोः, सत्यमेव जयते इति वैदिकं वाक्यम्। वैदिकप्रयोगेषु लौकिकं व्याकरणं सर्वत्र अन्वेति इति न। 'सत्यमेव जयते' इति वैदिकं वाक्यं तु शुद्धम् एव।

शि - तर्हि तत् वाक्यम् अनुकुर्वद्भिः अस्माभिः व्यवहारे 'जयते' इति प्रयोगः कर्तुं न शक्यते।

आ - आम्। केभ्यश्चित् वर्षेभ्यः पूर्वं सर्वकारेण एकं घोषणावाक्यं प्रयुक्तम् आसीत्– 'श्रम एव जयते' इति। किन्तु केनचित् पण्डितेन स्मारितम् इति भाति। अल्पे एव काले 'श्रम एव जयति' इति वाक्ये परिवर्तनम् आनीतम् इति स्मरामि।

शि - श्रीमन्! वैदिकव्याकरणं लौकिकव्याकरणात् तत्र तत्र भिन्नः भवति इत्यतः वैदिकप्रयोगाणाम् अनुकरणे जागरूकता आश्रयणीया। एवं खलु?

आ - न केवलं वैदिकप्रयोगाणां विषये एषा धारणा, प्राचीनप्रयोगाणाम् अनुकरणे अपि कदाचित् जागरूकता अपेक्षिता भवति। अन्यथा अस्माभिः दोषः कृतः भवेत्।

शि - उदाहरणम्?

आ - 'न विश्वसेत् अविश्वस्तं विश्वस्तं नातिविश्वसेत्' इति प्रयोगः श्रुतः भवता इति भावयामि। अत्र 'विश्वसेत्' इति क्रियापदरूपं प्रयुक्तम्। एतस्य अनुकरणम् अस्माभिः न करणीयम्। 'विश्वस्येत्' इति प्रयोगः करणीयः। यतः स च धातुः चतुर्थगणीयः।

शि - एवं तर्हि 'विश्वसेत्' इति प्रयोगं कुर्वता कविना दोषः कृतः इति?

आ - एतादृशे सन्दर्भे आर्षप्रयोगात् (ऋषितुल्यैः प्रयोगः कृतः इत्यतः) तत्र साधुत्वम् अङ्गीकुर्मः। किन्तु एतस्य रूपस्य अनुकरणं कुर्वता लोके केनापि तादृशः प्रयोगः कृतः चेत् स च दोषाय एव।

शि - अपरं किमपि उदाहरणम्?

आ - पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी।
शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः।।
इत्यस्मिन् श्लोके 'सहोदरी' इति प्रयोगः कृतः। व्यवहारे 'सहोदरा' इत्येव प्रयोक्तव्यम्।

शि - 'सहोदरी' इति रूपम् असाधु?

आ - तथैव वक्तव्यं भवति। यतः कथम् अपि तस्य रूपस्य साधुत्वकथने प्रमाणं न पश्यामः वयम्। तदस्तु, भवान् 'रामाय रामभद्राय' इति श्लोकं जानाति खलु?

शि - आम्। रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः।।
इति पूर्णपाठः।

आ - अत्र पतये इति प्रयुक्तम्। वस्तुतः तु पतिशब्दस्य चतुर्थीविभक्त्यन्तं रूपं पत्यै इति। समासे तु– रमापतये, सीतापतये – इत्यादीनि रूपाणि भवन्ति। केवलस्य पतिशब्दस्य चतुर्थ्यन्तं रूपं तु 'पत्यै' इत्येव।

शि - सत्यं खलु! एतानि सर्वाणि दोषस्थानानि एव।

आ - एतादृशानि स्थानानि बहूनि न स्युः। तथापि श्लोकानां प्रसिद्धिकारणतः भ्रान्ताः वयं साधुत्वविषये चिन्तनम् अकृत्वा प्रयोगम् अनुकुर्मः कदाचित्, दोषभागिनः च भवामः।

शि - 'पुराणमित्येव न साधु सर्वम्' इति कालिदासेन युक्तम् उक्तम्।



# चन्दमामा

अक्टोबर्-१९८९

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००




# चन्दमामा

संस्थापकः – **'चक्रपाणिः'** सञ्चालकः – **'नागिरेड्डी'**

'एवं भवतु भवान्' इति वदद्भिः अस्माभिः कस्मैचित् बालकाय वर्तमाना काऽपि व्यक्तिः किं प्रदर्शयितुं शक्या? प्रायः न।

राजकीयाः पुरुषाः तु मत (Vote) निमित्तं यत्किमपि कर्तुं सिद्धाः। चलचित्रनटाः तु स्वेच्छावृत्तिं स्वव्यवहारं मन्यन्ते। उद्योगिनः (Employees) तु धनसम्पादनपराः सन्तः अनीतिं नीतिं मन्यन्ते। पामराः तु विशेषज्ञानवन्तः न भवन्तीत्यतः आदर्शाः भवितुं न अर्हन्ति। एवं तर्हि आदर्शः पुरुषः कः अस्ति लोके?

अस्माकं सर्वेषां चिन्तनम् एवम् एव अस्ति खलु? किं वयम् आत्मनः विषये चिन्तितवन्तः? 'अहम् इव भवतु भवान्' इति कञ्चित् वयं वक्तुं शक्नुयाम किम्?

कनिष्ठाः जानन्तः अजानन्तः वा ज्येष्ठान् सदा अनुकुर्वन्ति। यदि अस्माकं जीवनम् अनीतियुक्तं स्यात्, अधर्मपरं च स्यात् तर्हि तस्यापि प्रभावः केषाञ्चित् उपरि भवति एव। एवं समाजे यत् कालुष्यं दृश्यते तत्र वयम् अपि कारणीभूताः एव।

गान्धीजिना उक्तम् – 'भवान् पापं मा करोतु, येन लोके पापिषु एकः न्यूनः भवेत्' इति। सत्यं खलु एतत्? एकैका व्यक्तिः अपि यदि स्वचारित्र्यविषये चिन्तयेत् तर्हि समाजः अपि परिष्कृतः भविष्यति। व्यक्तिपरिष्कारं विना समाजस्य उन्नतिः कदापि न भवति।

सम्पुटः – ६ अक्टोबर् – १९८९ सञ्चिका – ७

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



रसप्रश्नाः–

# युद्धारम्भात् पूर्वम् ......

(रामः सेतुं निर्माय समुद्रम् अतिक्रम्य लङ्कातीरं प्राप्तवान्। रावणः प्रासादशिखरम् आरुह्य शत्रुसेनां स्वयं परिशीलितवान्। सीतां वञ्चयितुं तेन प्रयत्नः कृतः। रामपक्षे रावणपक्षे च मन्त्रालोचनं प्रवृत्तम्। वाल्मीकिरामायणस्य एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। उत्तररूपेण विकल्पत्रयम् अस्ति। युक्तम् उत्तरं जानन्तु।)

I. मायामयं शिरः प्रदर्श्य सीतां भायितवान् रावणः। तत् मायामयं शिरः कः निर्मितवान्?

(१) द्विजिह्वः। (२) विद्युज्जिह्वः। (३) दीर्घजिह्वः।

II. सीतां भाययितुम् इच्छन् रावणः 'रामः केन मारितः' इति वदति?

(१) लम्बहस्तेन। (२) विहस्तेन। (३) प्रहस्तेन।

III. मायामयं शिरः दृष्ट्वा भ्रान्त्या दुःखम् अनुभवन्त्याः सीतायाः आश्वासनं का कृतवती?

(१) विभीषणपत्नी सरमा। (२) घोरराक्षसी सुरमा।

(३) प्रहस्तपत्नी सुरामा।

IV. रावणेन आयोजितायां सभायां स्थितः कः 'सन्धिः एव उचितः' इति रावणं बोधितवान्?

(१) मन्त्री महोदरः। (२) मातामहः माल्यवान्।

(३) सहोदरः कुम्भकर्णः।

V. इन्द्रजिदादयः पश्चिमादिद्वाररक्षणार्थं रावणेन नियोजिताः। रावणः स्वयं कस्य द्वारस्य रक्षणार्थं स्थितवान्?

(१) पूर्वद्वारस्य। (२) दक्षिणद्वारस्य। (३) उत्तरद्वारस्य।

VI. विभीषणः शत्रुबलस्य ज्ञानार्थं स्वसचिवान् अनल-शरभ-सम्पाति-प्रघसनामकान् लङ्कां प्रेषितवान्। ते केन रूपेण गत्वा प्रत्यागतवन्तः।

(१) पक्षिरूपेण। (२) राक्षसरूपेण। (३) अदृश्यरूपेण।

उत्तराणि–

I.-१. II.-३. III-१. IV-२. V-३. VI-१.

# रसवार्ताः



## अशनीनां सङ्ग्राहकः

अशनीनां सङ्ग्रहः कथं शक्यः इति आश्चर्यम् अनुभवन्ति वा भवन्तः? यत्र अशनिपातः भवति तत्रत्याः सिकताः दर्पणरूपं प्राप्नुवन्ति। तादृशीः सिकताः सङ्गृहणाति जर्मनृदेशीयः रिचर्ड् रीडिजेर्। एतादृश्यः सिकताः तडिल्लता इव विराजन्ते।

## वानराणां दुर्गम्

सिम्लासमीपस्थस्य पर्वतशिखरस्य उपरि उन्नतानां देवदारुवृक्षाणां च्छायायां कश्चन हनूमतः आलयः अस्ति। तत्र आगत्य भक्ताः यानि फलानि, भक्ष्यादीनि च समर्पयन्ति तानि खादन्तः, सुखेन जीवन्तः, धाष्ट्र्येन सञ्चरन्तः वानराः सहस्रशः सन्ति।





## पतङ्गानाम् आक्रमणम्!

ग्रामनगराणां कृषिक्षेत्राणां च उपरि शलभाः आक्रमणं कुर्वन्ति इति तु सर्वे जानन्ति एव। किन्तु पतङ्गानाम् आक्रमणं तु अश्रुतपूर्वम्। किन्तु इरानृदेशस्य दर्गाजृनगरे एतादृशम् आक्रमणं प्रवृत्तम्। पतङ्गाः अकस्मात् आक्रमणं कुर्वन्तः यानचालकानां यात्रिकाणां च दृष्टिप्रतिरोधं कृतवन्तः।

## हस्तिपके प्रीतिमान् गजः

मधुरैनगरे जनसम्मर्दयुते विपणिमार्गे गजम् आरुह्य सञ्चरन् कश्चन हस्तिपकः धनं सङ्गृहणन् आसीत्। अतः आरक्षकाः तं कारागारे स्थापितवन्तः। एतेन खिन्नः गजः आरक्षकस्थानकस्य द्वारि दृढम् उपाविशत्। तत्र गमनागमनं यथा न शक्येत तथा अकरोत् सः। अन्ते आरक्षकाः हस्तिपकं यदा बन्धविमुक्तं कृतवन्तः तदा सः गजः विजयगर्वेण शुण्डाम् उन्नीय घीङ्कृत्य ततः निरगच्छत्।



# असदृशी बुद्धिमत्ता!

कस्मिंश्चित् ग्रामे पूर्वं कश्चन युवकः आसीत्। सः कदाचित् खलीनं गृहीत्वा अश्वेन सह धावन् जनैः दृष्टः। एवं धावन् सः अन्यं ग्रामं प्राप्य कस्याश्चित् धर्मशालायाः पुरतः उपविश्य दीर्घं श्वासोच्छ्वासं कृतवान्।

तदा धर्मशालायाः यजमानः तं पृष्टवान्– "अये! खलीनं गृहीत्वा अश्वेन सह धावन् आगतवान् खलु? किमर्थम् एतत्?" इति।

"त्वरया मया एषः ग्रामः प्राप्तव्यः आसीत्। अतः तथा धावन् आगतवान्" इति उक्तवान् सः युवकः।

"त्वरया आगन्तव्यं चेत् अश्वम् आरुह्य आगन्तुं शक्यम् आसीत् खलु?" इति उक्तवान् धर्मशालायाः यजमानः।

एतत् श्रुत्वा युवकः किमपि न उक्तवान्। मन्दहासं प्रकटितवान्, तावदेव। धर्मशालायाः यजमानः कुतूहलेन पुनः अपि पूर्वतनम् एव प्रश्नं पृष्टवान्।

तदा सः युवकः एवम् उक्तवान्– "एतं ग्रामं प्रति पादाभ्याम् एव आगन्तव्यम् इति चिन्तितवान् आसम्। तदा मम यजमानः उक्तवान् यत् अश्वम् आरुह्य गच्छतु भोः, द्वयोः पादयोः यावती शक्तिः ततोऽपि द्विगुणिता शक्तिः पादचतुष्टयस्य भवति इति। तदा मम विवेकः जागरितः। 'एवं तर्हि षण्णां पादानां शक्तिः ततोऽपि अधिका भवेत्' इति आलोच्य अहम् अश्वेन सह धावन् आगतवान्। अश्वस्य चत्वारः पादाः। मम तु पादद्वयम्। आहत्य षट् पादाः। अतः आगमने वेगः अधिकः जातः स्यात् एव" इति।

"असदृशी बुद्धिमत्ता भवतः!" इति उद्गारं प्रकटितवान् सः धर्मशालायाः यजमानः।






# सूची परशुः च

शान्तिवर्धनः नाम राजा पूर्वं कोसलदेशं पालयन् आसीत्। सः प्रजाहितार्थं निरन्तरं योजनाः आयोजयति चेदपि देशः विशालः इति कारणतः देशे कुत्रचित् अशान्तिः, असौकर्यं च तिष्ठति एव।

स्वकीयं कष्टं निवेदयितुम् आगच्छतः जनान् सर्वान् स्वयं द्रष्टुं न शक्नोति महाराजः। अतः बहवः राजदर्शनं प्राप्तुम् अशक्ताः खिन्नाः भवन्ति स्म। एतेन राजा अपि खिन्नः भवति।

'एषा समस्या कथं परिहरणीया?' इति बहुधा आलोचितवान् शान्तिवर्धनः। 'मम प्रजानां च मध्ये बुद्धिमान्, गुणवान्, प्रत्युत्पन्नमतिः, क्रीयाशीलः च कश्चन मध्यवर्तिरूपेण नियोजनीयः' इति निश्चितवान् सः।

'एवं मध्यवर्ती यः नियोज्यते सः प्रजानां कष्टं श्रुत्वा तत्परिहारार्थं सम्बद्धान् अधिकारिणः सूचयेत्। सूचनाः व्यवहारे आगताः उत न इत्यपि सः परिशीलयेत्। मुख्यं विषयं केवलं महाराजं मां निवेदयेत् सः। तदा मम कार्यभारः गणनीयप्रमाणेन न्यूनः भवष्यति' इति राजा चिन्तितवान्।

मध्यवर्तिरूपेण यः नियोज्यते सः प्रजाप्रतिनिधिः इति नाम्ना आह्वातव्यः इति निश्चितवान् राजा। स्वकीयं विचारं मन्त्रिणं कुमारगुप्तं निवेदितवान् सः।

राज्ञः विचारः मन्त्रिणे कुमारगुप्ताय अपि अरोचत। सः राजानम् उक्तवान्— "अस्मदीयं शासनं सर्वजनहितकारकं यथा स्यात् तथा करणे भवतः विचारः नितराम् उपकरोति । तादृशः नियोक्तव्यः एव। सः प्रजाप्रतिनिधिः भवता सूचितैः गुणैः अवश्य युक्तः स्यात्। तेनैव सह सः प्रजाभिः



सह सदापि सहानुभूत्या सहनया च व्यवहरेत्, राज्ञः प्रजानां च मध्ये ऐकमत्यं वर्धयेत् च" इति।

अनन्तरदिने एव राज्ये सर्वत्र सडिण्डिमघोषं वार्ता प्रसारिता यत् योग्यः अभ्यर्थी प्रजाप्रतिनिधिरूपेण नियोज्यते इति। बहवः अभ्यर्थिनः उद्योगम् अभिलषमाणाः आगताः। तेषां योग्यतायाः परीक्षार्थं विभिन्नाः परीक्षाः अपि आयोजिताः।

एतासु सर्वासु परीक्षासु सुकुमारः गुणशीलः इति द्वौ युवकौ उत्तीर्णौ जातौ। एतयोः मध्ये कः नियोक्तव्यः इति विचारः राज-मन्त्रिणोः मध्ये चर्चितः।

राजा उक्तवान्– "सुकुमारः एव नियोक्तव्यः" इति। किन्तु मन्त्रिणः आशयः आसीत् यत् गुणशीलः एव अर्हः इति।

तदा राजा उक्तवान्– "मन्त्रिवर्य! मम निर्णयः एव अन्तिमः भवतु इति अहं न वदामि। यतः शासनविषये, उद्योगिनां योग्यतानिर्णये च भवतः विशेषानुभवः अस्ति इति अहं जानामि। किन्तु निर्दिष्टं कारणं विना अहं मम निर्णयं परिवर्तयितुम् अपि न इच्छामि। अतः आवाभ्यां चितौ एतौ गुरोः मतङ्गस्य समीपं प्रेषयाव। तस्य निर्णयः एव अन्तिमः भवतु" इति।

मन्त्री कुमारगुप्तः एतं प्रस्तावम् अङ्गीकृतवान्। सुकुमारः गुणशीलश्च गुरोः मतङ्गस्य समीपं प्रेषितौ।

अनन्तरदिने तौ अभ्यर्थिनौ राजभवनम् आगतवन्तौ। तत्समये मन्त्री अपि तत्रैव आसीत्।

तदा तौ अभ्यर्थिनौ गुरुणा दत्तं वस्तु तयोः पुरतः स्थापितवन्तौ। उक्तवन्तौ च– "गुरुः आवयोः पुरतः वस्तुद्वयं संस्थाप्य 'यः यत् इच्छति तत् स्वीकरोतु' इति सूचितवान्। आवाभ्यां तथैव कृतम्। तेन अन्यत् किमपि न उक्तम्" इति।

राजा आश्चर्येण पृष्टवान्– "निर्णयः कोऽपि न श्रावितः वा तेन?" इति।

"न महाराज! मतङ्गगुरुणा अन्यत् किमपि न उक्तम् एव। एतत् राज्ञे यच्छताम् इति एतावत् एव सूचितम्" इति उक्तवन्तौ

तौ अभ्यर्थिनौ।

सुकुमारेण कश्चन परशुः आनीतः आसीत्। गुणशीलेन च लघुसूची आनीता आसीत्। तदुभयं दृष्ट्वा मन्त्री मन्दहासं प्रकटितवान्।

राजा शान्तिवर्धनः एतस्य तात्पर्यम् अजानन् प्रश्नार्थकदृष्ट्या मन्त्रिणः मुखं दृष्टवान्।

तदा कुमारगुप्तः राजानम् उक्तवान्– "महाराज! मतङ्गगुरोः आशयः मया ज्ञातः। तम् अहं प्रकाशयितुं शक्नोमि एव। तदपेक्षया एताभ्याम् एव वाचयामि चेत् तदा औचित्यम् अधिकम्। एतयोः मेधाशक्तेः अपरा परीक्षा अपि भवितुम् अर्हति। अतः तत्तद् वस्तु किमर्थम् आनीतम् इति एतौ एव कारणं वदताम्" इति।

शान्तिवर्धनः एतत् अङ्गीकृत्य– "तत्तस्य वस्तुनः आनयने किं कारणम् इति भवन्तौ एव वदताम्" इति तौ अभ्यर्थिनौ आदिष्टवान्।

तदा सुकुमारः सन्तोषेण अग्रे आगत्य गर्वमिश्रितेन स्वरेण उक्तवान्– "प्रभो! एतस्य परशोः द्वारा गुरुः मम सामर्थ्यं प्रकाशितवान् इति अहं भावयामि। एतस्य परशोः धारा यथा तीक्ष्णा अस्ति तथा मम मेधाशक्तिः अपि अकुण्ठिता अस्ति इति तेन सूचितम्। कठिनम् अपि वृक्षम् एषः परशुः यथा लीलया छिनत्ति तथैव मम मेधाशक्तिः




अपि जटिलाः अपि समस्याः लीलया परिहर्तुं समर्था। मया परशुः यत् स्वीकृतः तत् अनुमतं गुरुणा। एतेन सिध्यति यत् गुरुः मम प्रतिभां पुरस्कृतवान् इति। अतः अहम् एव प्रजाप्रतिनिधिः भवितुम् अर्हः इत्येव गुरोः आशयः इति अहं भावयामि" इति।

सुकुमारस्य विवरणं श्रुत्वा राजा शान्तिवर्धनः सन्तोषेण तृप्त्या च शिरः चालितवान्।

अनन्तरं गुणशीलः अग्रे आगत्य विनयेन उक्तवान्– "प्रभोः! मादृशे अभ्यर्थिनि एतस्मिन् दोषं पश्यामि इति मा भावयतु कृपया। मित्रेण सुकुमारेण परशुविषये यद्यत् उक्तं तत्सर्वं सत्यम् एव। किन्तु एकः अंशः

तेन न लक्षितः। परशुः यथा काष्ठानि लीलया छिनत्ति तथैव चन्दनवृक्षम् अपि अविवेकेन छिनत्ति एव। परशोः कार्यं छेदनम्। छेदनसमये सः योग्यतां न गणयति। अन्यच्च छेदनस्य अर्थः— एकस्मिन् भागद्वयस्य कल्पनम्। किन्तु एतां सूचीं पश्यतु। एषा आकारेण अल्पा चेदपि द्विधा दशधा वा छिन्नम् अपि वस्त्रम् एकीकरोति। परशुः विनाशस्य चिह्नं चेत् सूची एकतायाः सूचिका" इति।

गुणशीलस्य वचनं श्रुत्वा राजा शान्तिवर्धनः पुनः अपि प्रश्नार्थकदृष्ट्या मन्त्रिणः मुखं दृष्टवान्।

तदा कुमारगुप्तः उक्तवान्— "प्रभो! गुणशीलस्य कथनम् एव अस्मद्विचारानुगुणम् अस्ति इति भाति मम। सुकुमारः बुद्धिमान् इति सत्यं चेदपि तस्य सहना, ऐकमत्यभावना च न्यूना। प्रजाप्रतिनिधिः यः भवेत् तस्मिन् असीमा सहना ऐकमत्यभावना च अवश्यं भवेत् इति आलोचयता गुरुणा मतङ्गेन गुणशीलः एव चितः इति भावनीयम्। गुरोः चयनम् उचितम् एव इति एतयोः विवरणश्रवणात् भवता एतावता एव ज्ञातं स्यात्। 'श्रेष्ठः परशुः मया स्वीकृतः इत्यतः अहम् एव प्रजाप्रतिनिधिः भविष्यामि' इति आलोचयन् सुकुमारः गर्वेण स्वकीयं प्रजाप्रतिनिधित्वार्हतां प्रतिपादितवान्। गुणशीलः तु विनयेन एव वस्तुनोः गुणावगुणं निवेदयन् निर्णयाधिकारः राजाधीनः इति भावयित्वा मौनं स्थितवान्। 'यदि मम योग्यता राज्ञा अनुमता स्यात् तर्हि पदवी मम भविष्यति एव' इति तस्य विचारः। अतः गुणशीलः एव प्रजाप्रतिनिधिः भवितुम् अर्हति, न तु सुकुमारः" इति।

मन्त्रिणः वचनं युक्तं मन्यमानः राजा शान्तिवर्धनः गुणशीलं प्रजाप्रतिनिधिस्थाने नियोजितवान्। राज्ञः चिन्तनानुगुणं राज्ये समस्याः परिहृताः। सहजतया शान्तिः सुखं च प्रवृद्धम्।






४

"आगच्छतु वत्स! महती बुभुक्षा स्यात् खलु भवतः? प्रातः अपि भवान् किञ्चित् एव भुक्तवान्" इति वदन्ती पाचिका सीता सूर्यं लालयन्ती अन्तः नीत्वा भोजनं परिवेषितवती। भोजनसमये आतङ्केन सूर्यं पृष्टवती सा– "शालायाम् अध्यापकः ताडितवान् तु न स्यात् खलु?" इति।

सूर्यः लज्जया शिरः अवनमय्य मौनं स्थितवान्। विषयपरिवर्तनं कर्तुम् इच्छन् सीतां पृष्टवान् सः– "माम् अन्विष्य कोऽपि आगतः आसीत् वा?" इति।

"भवन्तम् अन्विष्य को वा आगच्छेत् भोः?" इति हसन्ती पृष्टवती सीता।

सत्यनारायणस्य विषये किमपि प्रष्टव्यम् इति चिन्तयति सूर्यः। किन्तु साक्षात् प्रष्टुं सङ्कोचः। दैववशात् तावता सीतायाः मुखात् एव सत्यनारायणसम्बन्धी विषयः निर्गतः– "भवतः पितरम् अन्विष्यन्तः बहवः आगतवन्तः। किन्तु तस्य अस्वास्थ्यम् इति भाति। सः द्वित्रान् केवल दृष्ट्वा किञ्चित् एव वार्तालापं कृत्वा– 'अद्य अन्येन केनचित् अपि सह वार्तालापं न इच्छामि' इति उक्त्वा प्रकोष्ठे सुप्तवान्। काचित् चिन्ता तं बाधते इति भाति" इति।

"के के आगताः आसन्?" इति कुतूहलातिशयेन पृष्टवान् सूर्यः।

"आगतेषु द्वित्रान् अहं जानामि। अन्येषां परिचयः नास्ति मम" इति वदन्ती



कर्मकरः सूर्यं बलात् अधः नीतवान्।

"भोः! एवं विना कारणं कोलाहलः न उचितः। यजमानः कुपितः भवति चेत् दन्तान् पातयेत्। जागरूकः भवतु" इति सूर्यम् उक्त्वा ततः निर्गतवान् सः कर्मकरः।

सूर्यस्य मनसि इदानीं विविधाः विचाराः। यैः सह मम व्यवहारः अस्ति तेभ्यः सर्वेभ्यः पत्रं लिखामि इति चिन्तितवान् सः। किन्तु मम हस्ताक्षरं भिन्नम् इत्यतः ते न विश्वसेयुः इति अपरः विचारः आगतः। समस्यायाः परिहारः कथम् इति सः बहुधा चिन्तयति। योग्यः मार्गः तु न स्फुरति एव। 'इतः परम् अल्पे एव काले शाला गन्तव्या। तावति काले किं समस्यायाः परिहारं चिन्तयामि, उत बाह्यव्यवहारविषये चिन्तयामि? सत्यनारायणस्य नैजं स्वरूपं यावत् प्रकटितं न भवति तावत् मम वचनेषु कोऽपि न विश्वसिति। एवं तर्हि इतः पलाय्य किञ्चित्कालं गृहात् दूरे तिष्ठामि चेत् कथम्? पलायनार्थम् अपि धनम् आवश्यकं खलु? धनप्राप्त्यर्थं कः उपायः आश्रयणीयः? अथवा धनं विना एव इतः निर्गच्छामि। यत् भवति तत् भवतु नाम' इति चिन्तितवान् सूर्यः।

पाचिका सीता, अन्ये कर्मकराः च यथा न जानीयुः तथा निर्गत्य रेलयानस्थानकं गतवान् सूर्यः। द्विवादनानन्तरम् एकं यानं ततः निर्गमिष्यति इति ज्ञातम्। 'तस्मिन् याने

परिचितानां तेषां नाम उक्तवती सीता। सूर्यः त्वरया भोजनं समाप्य स्वप्रकोष्ठं गत्वा द्वारं ताडितवान्। बहुवारं ताडनेन अपि अन्तर्भागतः कापि प्रतिक्रिया न आगता।

सूर्यः पुनरपि वेगेन बलात् च द्वारं ताडितवान्। तदा अन्तर्भागतः प्रश्नः आगतः– "कः सः?" इति।

"अहं भोः। द्वारम् उद्घाटयतु। सम्भाषणीयम् अस्ति" इति उक्तवान् सूर्यः।

"अहम् इदानीं न उत्तिष्ठामि। रात्रौ वार्तालापं करिष्यावः तावत्" इति उक्तवान् सत्यनारायणः।

"द्वारम् उद्घाटयतु भोः" इति कोपेन उच्चैः उक्तवान् सूर्यः। तत् श्रुत्वा आगतः

उपविश्य गच्छामि। कुत्र गत्वा किं करणीयम् इति अनन्तरं चिन्तयिष्यामि' इति निश्चितवान् सः।

गृहे स्थितः सत्यनारायणः तु द्वारं पिधाय आदिनं प्रकोष्ठे एव स्थितवान्। दश रूप्यकाणि ऋणरूपेण प्रष्टुम् आगतवान् कश्चित्। तस्य नामादिकम् अपृष्ट्वा सीताद्वारा तस्मै धनं प्रेषितवान् सत्यनारायणः। अपरः कश्चित् आगत्य 'विंशतिः रूप्यकाणि दातव्यानि सन्ति सूर्येण' इति सीताम् उक्तवान्। तस्मै अपि तावन्ति रूप्यकाणि दत्तवान् सत्यनारायणः। वार्तालापार्थं ये आगताः तान् अनारोग्यव्याजम् उक्त्वा प्रतिप्रेषितवान्।

एवं पदे पदे कष्टम् अनुभवति सत्यनारायणः। तस्य अपरा समस्या नाम— सीता कर्मकराः च तदीयं व्यवहारं सन्देहेन पश्यन्ति स्म। सीता तु तम् आश्चर्येण पश्यति। 'मम व्यवहाराः वचनानि च मदीयानि इव भासन्ते, उत न? मम व्यवहारम् अन्ये सन्देहेन पश्यन्तः सन्ति वा? सन्देहः एकवारम् आगतः चेत् ते सूक्ष्मपरिशीलनं कर्तुम् आरभन्ते। तदा वस्तुस्थितिः प्रकटिता भवेत् अपि। अन्यत्र पिता तु सर्वथा अहम् इव न व्यवहरति। तस्य व्यवहारे प्रौढत्वं स्फुटं दृश्यते। तदीये मुखे ज्येष्ठत्वस्य कान्तिः अपि दृश्यते। मम मुखे अपि बालत्वस्य कान्तिः मया स्वयं दर्पणे



दृष्टा। एतत् वैलक्षण्यम् अन्ये ज्ञातवन्तः स्युः खलु? सीता तु एतादृशेषु विषयेषु सदा जागरूका एव' इति बहुधा आलोचयति सत्यनारायणः।

अन्धकारः सर्वत्र प्रसृतः। तथापि सत्यनारायणः प्रकोष्ठात् अन्यत्र गन्तुं न इच्छति। 'पित्रा सह वार्तालापार्थं कश्चित् रात्रौ अपि आगच्छेत्' इति जानाति सः।

अष्टवादनसमये पाचिका सीता आगत्य उक्तवती— "श्रीमन्! बालकः इतोऽपि न प्रत्यागतः। अष्टवादनम् अतीतम्" इति।

"शालातः सः गृहम् आगतवान् आसीत् वा न वा?" इति पृष्टवान् सत्यनारायणः।

"सः मध्याह्ने शालां न गतवान् एव। कुत्रापि क्रीडनार्थं गतवान् स्यात्" इति



उक्तवती सीता।

"किमर्थं शालां न गतवान् सः? बलात्कारेण वा भवत्या सः शालां प्रेषणीयः आसीत्" इति उक्तवान् सत्यनारायणः।

"श्रीमन्! बालस्य विषये कोपं बलात्कारं वा प्रदर्शयितुम् अद्य अहं न शक्नोमि। सः ऋजुदृष्ट्या पश्यति चेदपि मम भीतिः भवति। न जाने, किं कारणम् इति" इति उक्तवती सीता।

"एवं तर्हि सः कुत्र गतवान् स्यात्?" इति आतङ्केन पृष्टवान् सत्यनारायणः। आतङ्कस्य कारणं पिता न दृश्यते इति न, अपि तु पित्रा रहस्यं कदाचित् प्रकट्येत इति।

"बालः सः सकुशलं स्यात्। सद्यः आगच्छेत्। भवान् भोजनं समापयतु" इति उक्तवती सीता।

"इदानीं मास्तु, किञ्चित्कालानन्तरं भोजनं करिष्यामि अहम्" इति उक्तवान् सत्यनारायणः।

"किम् एतत्? भोजनानन्तरं घण्टाद्वयं यावत् मन्दं सञ्चारः करणीयः इति वैद्येन सूचितं विस्मृतं वा? उदरदोषः तु अनुवर्तते एव। अतः शीघ्रं भोजनं समापयतु" इति अधिकारवाण्या उक्त्वा ततः गतवती सीता।

सत्यनारायणः प्रतिवचनं किमपि अनुक्त्वा गत्वा भोजनं समापितवान्। हस्तं प्रक्षाल्य यावत् सः बहिः आगतः तावता कश्चित्– 'अये सूर्य!' इति वदन् गृहं प्रविष्टवान्। तथा आगतः न्यायवादी परमेश्वरः। सः पितुः आत्मीयं मित्रम्। गृहस्य सर्वे न्यायालयीयाः व्यवहाराः तेनैव निरुह्यन्ते स्म। सः तदा तदा एवं गृहम् आगच्छति। तादृशे सन्दर्भे तयोः मध्ये यः वार्तालापः प्रचलति तस्य पूर्वापरं किञ्चिदपि न जानाति सत्यनारायणः।

न्यायवादी परमेश्वरः पूर्वतनाभ्यासस्य अनुगुणं सत्यनारायणम् अनुसृत्य अट्टम् आरुह्य आगतवान् एव। आसन्दे उपविश्य सः किमपि किमपि उक्तवान्। विषयः तु न्यायालयसम्बन्धी। सत्यनारायणेन एतावत् एव ज्ञातं यत् श्वः न्यायालयः गन्तव्यः इति। "भोः, भवान् एव एतस्मिन् व्यवहारे प्रबलः साक्षी" इति वदन् न्यायवादी

अनन्तरदिने न्यायालये यद्यत् वक्तव्यं तत्सर्वं विस्तरेण बोधितवान्। तत्र एकः अंशः अपि सत्यनारायणेन न अवगतः।

दशवादनपर्यन्तं सर्वम् उक्त्वा परमेश्वरः निर्गतवान्। किन्तु सत्यनारायणस्य मनःशान्तिः नास्ति। 'पिता कुत्र गतः? तस्य का गतिः जाता स्यात्? श्वः किं प्रवर्तेत?' इत्येवं निरन्तरं चिन्तयति सः।

पितुः विषये सगम्भीरं चिन्तयति सत्यनारायणः। 'एषः प्रपञ्चः ज्येष्ठानाम् एव, न तु मादृशानां बालानाम्। क्लिष्टान् विषयान् ते एव ज्ञातुं समर्थाः। पितरं सम्यक् अनवगच्छता मया दोषः कृतः। वस्तुतः पिता किम् अहितं कृतवान्? न किमपि। 'शालां गत्वा सम्यक् पठतु' इति एतावान् एव आसीत् तस्य आदेशः। विनयेन व्यवहरतु इति मां सूचयति स्म सः। मया निर्वोढुम् अशक्यान् बहून् व्यवहारान् सः लीलया निर्वहति स्म। इतः परं यदि अहं बालः भवेयं तर्हि पितरम् अकोपयन् विनयेन व्यवहरेयम्' इति आलोचितवान् सत्यनारायणः।

एतस्मिन् एव समये गृहस्य पुरतः अन्धकारमये प्रदेशे सोपानानाम् उपरि उपविष्टः अस्ति सूर्यः। सः पलायनम् इच्छन् गृहात् निर्गतः आसीत् खलु? रेल्यानम् आरूढं तेन। किञ्चिद्दूरं गमनानन्तरं चिटिकापरीक्षकः आगतः। सः एतं चिटिकां पृष्टवान्। सूर्यः शरीरेण बालः चेदपि मनसा



प्रौढः एव खलु? अतः तदीयं मुखं विवर्णं जातम्। एतावता एव सः परीक्षकः ज्ञातवान् यत् अयं चिटिकारहितः यात्रिकः इति। चपेटां दत्त्वा यानात् एतम् अवतारितवान् सः।

अनन्यगतिकः सूर्यः पादाभ्याम् एव सुदीर्घं प्रयाणं कुर्वन् रात्रौ एकादशवादनसमये धूल्या स्नातः सन् गृहं प्रत्यागतवान्।

'इतः परम् अपि बालकरूपेण दिनानि किं, क्षणान् अपि यापयितुं न शक्नोमि। एषः प्रपञ्चः बालकानां कृते न। मम बाल्ये यत् अनुभूतं तत् किमपि इदानीं न स्मर्यते मया। पुत्रस्य हितार्थम् एव मया बोधनं कृतम्। सः खेदनीयः इति विचारः न मम सर्वथा न



आसीत्। एषु दिनेषु मया तेन सह प्रीत्या व्यवहारः एव न कृतः। पिता कश्चित् कदापि एवं न करोति खलु? भगवद्दयया यदि अहं पूर्वतनं रूपं प्राप्नुयां तर्हि पुत्रं प्रीत्या एव पश्येयम्' इति आलोचयन् सूर्यः नेत्रे निमील्य भगवन्तं प्रार्थितवान्– "भगवन्! पूर्वतनरूपेण माम् अनुगृह्णातु कृपया। इतः परं पुत्रं न पीडयिष्यामि अहम्" इति।

एतत्सर्वं पश्यन्ती स्थिता लक्ष्मीदेवी श्रीमन्नारायणम् उक्तवती– "तयोः उभयोः अपि अपेक्षां पूरयतु कृपया" इति।

"यथा भवती इच्छति तथैव भवतु तावत्" इति उक्तवान् नारायणः।

सोपानानाम् उपरि उपविष्टः सूर्यः मध्यवयस्कस्य स्वस्य रूपम् एव प्राप्तवान्। प्रकोष्ठे मञ्चे सुप्तः सत्यनारायणः अपि स्वकीयं पूर्वतनं शरीरं प्राप्तवान्।

"इतः परं तौ सुखेन तिष्ठतः। यतः द्वाभ्याम् अपि विवेकः प्राप्तः अस्ति" इति उक्तवती लक्ष्मीः।

"किं भवति इति तु सद्यः ज्ञायते एव" इति हसन् उक्तवान् श्रीमन्नारायणः।

सूर्यः सोपानात् उत्थितवान्। स्वस्य शरीरम् उन्नतम् इव अभासत। किन्तु रूपपरिवर्तनं सः न जानाति स्म एव। 'उच्चैः द्वारताडनशब्दः कृतः चेत् सर्वेऽपि जागरिताः भवेयुः। एकः जागरितः भवति चेत् चिन्ता नास्ति। तस्य मनःसमाधानं यथा स्यात् तथा किमपि वक्तुं शक्येत' इति आलोच्य सूर्यः मन्दं द्वारताडनशब्दं कृतवान्।

पाचिका सीता आगत्य द्वारम् उद्घाटितवती। 'एतावत्पर्यन्तं कुत्र गतवान् आसीत् भोः भवान्?' इति पृच्छन्ती आगता सा पुरतः सूर्यं दृष्ट्वा आश्चर्यम् अनुभवन्ती– "श्रीमन्! भवान् कदा बहिः गतवान्? प्रकोष्ठे सुप्तः आसीत् खलु भवान्? भवति बहिः स्थिते कः द्वारं पिहितवान्?" इति पृष्टवती।

तस्याः प्रश्नस्य विषये लक्ष्यम् एव नास्ति सूर्यस्य। सा मां 'श्रीमन्!' इति सम्बोधितवती इति सः नितरां सन्तुष्टः।

सन्तोषातिरेकेण सः स्वमुखं स्पृष्टवान्। तत्र श्मश्रु उपनेत्रं च दृश्यते। शिरः स्पृष्टं तेन। खल्वाटता अनुभूता तत्र! तस्य नेत्राभ्याम् आनन्दाश्रूणि आगतानि। मुखात् वचनानि एव न निर्गतानि। सीतायाः सम्भाषणं श्रुत्वा 'कः आगतः स्यात्' इति द्रष्टुम् इच्छन् सत्यनारायणः अधः आगतवान्। पुरतः पितरं दृष्ट्वा आश्चर्यम् अनुभवन् सः स्वकीयानि अङ्गानि परिशीलितवान्।

सत्यनारायणं दृष्टवतः सूर्यस्य कोपः प्रज्वलितः अभवत्। 'एतस्य बालकस्य कारणतः एव मया एतावन्ति कष्टानि अनूभूतानि। शालां बलात् प्रेषयन् एषः मां ताडनपात्रं कृतवान्। मम शरीरम् एव स्वायत्तीकृतवान् आसीत्। मां धिक्कुर्वन् मम शय्यायां स्वपिति स्म। कपाटिकायां स्थितं धनम् अपि स्वायत्तीकृतवान्।'

"अये उद्धत! समाप्तः खलु भवतः अवतारः" इति क्रोधेन गर्जन् तीक्ष्णया दृष्ट्या पुत्रं दृष्टवान् सूर्यः।

पितरं दृष्टवतः सत्यनारायणस्य अपि कोपः प्रवृद्धः। 'वृद्धं शरीरं मह्यं दत्तवान् आसीत् एषः। तदा तु क्रीडितुं न शक्यते स्म। धावितुं न शक्यते स्म। खादनम् अपि अशक्यम् आसीत्। जीर्णं शरीरम् अस्ति चेत् बालः इव व्यवहारः सर्वथा दुःशकः। सर्वस्य कारणीभूतः एषः इदानीं मयि कोपं प्रदर्शयति!'

"अवतारः मम न, अपि तु भवतः समाप्तः" इति महता कोपेन प्रत्युत्तरं दत्तवान् सत्यनारायणः।

"देवि! दृष्टवती खलु सर्वम् अपि। स्वदोषः स्वयं विवेकेन दूरीकरणीयः। अन्यः अत्र किमपि कर्तुं न अर्हति। मया दत्तं वरद्वयम् अपि अविगणय्य तौ यथापूर्वं व्यवहरन्तौ स्तः। ललाटे यथा लिखितं तथैव भवति। तस्य परिवर्तनम् असाध्यम् एव इति अंशः ज्ञातः खलु भवत्या?" इति मन्दहासपूर्वकम् उक्तवान् श्रीमन्नारायणः।

(समाप्ता)



# कः वञ्चयति?

शाकविक्रयिकः कश्चित् ग्रामाधिकारिणः समीपम् आगत्य निवेदितवान् यत् नवनीतविक्रेत्री शिवाम्बा मां वञ्चयन्ती अस्ति इति।

"तत् केन प्रकारेण?" इति ग्रामाधिकारिणा पृष्टः शाकविक्रयिकः उक्तवान्– "प्रतिदिनं सायं किलोपरिमाणकं नवनीतं प्रेषयतु इति तां सूचितवान् आसम्। एषु दिनेषु सा मा वञ्चयन्ती अस्ति। तया यत् नवनीतं प्रेष्यते तत्र परिमाणे किञ्चित् न्यूनता दृश्यते" इति।

ग्रामाधिकारी शिवाम्बां सम्यक् जानाति। सा प्रामाणिकतया एव व्यवहरति इति तेन बहुधा श्रुतम् आसीत्। इदानीं तस्याः विषये आगतं वञ्चनारोपं श्रुत्वा आश्चर्यम् अनुभवन् सः तां न्यायस्थानम् आनाय्य– "नवनीतस्य मापनं कथं करोति?" इति पृष्टवान्।

तदा शिवाम्बा उक्तवती– "श्रीमन्! अहं प्रतिदिनम् एतस्य आपणात् एव किलोपरिमाणकं शाकं क्रीणामि। तदीयः पौत्रः यदा नवनीतं नेतुम् आगच्छति तदा अहं एतेन दत्तं किलोपरिमाणकं शाकं तुलायां स्थापयित्वा तत्परिमाणकं नवनीतं ददामि" इति।

तदा ग्रामाधिकारी क्रोधेन– "कः कं वञ्चितवान् इति ज्ञातम् इदानीम्" इति वदन् शाकविक्रयिकं योग्येन दण्डेन दण्डितवान्।






# शरणागतराजः

इतस्ततः निरन्तरं सञ्चारेण क्षुण्णे मार्गे विना क्लेशं सञ्चरन् त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! अन्ये राजानः भवन्तं श्रेष्ठं यथा वदेयुः प्रजाश्च भवन्तं धर्मस्वरूपं यथा वदेयुः तथा करणीयम् इति उद्देशेन भवान् कार्यप्रवृत्तः इति भाति। तथा चिन्तनम् अस्ति चेत् तस्य साधनार्थं मार्गाः बहवः सन्ति। तदर्थम् एवं मध्यरात्रे घोरे श्मशानमार्गे अटनं किमर्थम्? एतत् भवान् यथा सम्यक् अवगच्छेत् तथा कर्तुं शरणागतनामकस्य राज्ञः कथां श्रावयामि। मार्गायासपरिहारार्थं तां कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा –

## वेतालकथा



पूर्वं वैशालीराज्यं शरणागतः नाम राजा पालयति स्म। सः शान्तिप्रियः। सकलशास्त्रेषु पारङ्गतश्चापि आसीत्। प्रतिवेशिराजैः सह मैत्र्या व्यवहरन् सः सदापि मधुरं सम्बन्धं जागरूकतया रक्षति स्म। अतः वैशालीराज्ये तत्प्रतिवेशिराज्ये च युद्धभीतिः न आसीत्।

किन्तु कालगतिः सदापि समाना न भवति खलु? कदाचित् सौवीरराज्यस्य राजा कालवर्मा चिन्तितवान् यत् वैशालीराज्यं स्वायत्तीकरणीयम् इति। राज्ञः शरणागतस्य शान्तिप्रियतां सः भीरुतां भावितवान् आसीत्। अतः कालवर्मा रहस्यरूपेण सैन्यं सङ्गृह्य वैशालीराज्यस्य सीमाम् अतिक्रम्य आगतवान्। गुप्तचराः महाराजम् एतां वार्तां अविलम्बेन निवेदितवन्तः।

एतत् ज्ञात्वा कमपि आतङ्कम् अप्राप्नुवन् शरणागतः राजदूतद्वारा एवं वार्तां प्रेषितवान्– "अये! कालवर्मराज! भवतः राज्याकाङ्क्षानिमित्तं सैनिकान् प्रजाः च रणदेव्यै अर्पयितुम् अहं न इच्छामि। यदि स्वशक्तौ भवतः विश्वासः स्यात् तर्हि द्वन्द्वयुद्धं कर्तुम् अग्रे आगच्छतु। यदि बाहुयुद्धे मम पराजयः भवेत् तर्हि अहं मदीयं राज्यं भवते अर्पयन् भवतः बन्दी भविष्यामि। भवान् पराजितः भवति चेत् भवदीयं राज्यं मह्यम् अर्पणीयम्" इति।

राजदूतद्वारा आगताम् एतां वार्तां श्रुत्वा कालवर्मा अङ्गीकारं सूचितवान्। शरणागतस्य दुर्गस्य पुरतः विशाले प्राङ्गणे युद्धार्थं व्यवस्था उपकल्पिता।

प्रथमं शरणागत-कालवर्मयोः मध्ये खड्गयुद्धं प्रवृत्तम्। उभयपक्षीयाः सैनिकाः, प्रजाः च तयोः युद्धकौशलम् आश्चर्येण पश्यन्ति। अल्पे एव काले कालवर्मणः खड्गः हस्तात् च्युतः अधः अपतत्। कालवर्मणः कण्ठपर्यन्तं गतः शरणागतस्य खड्गः कण्ठपार्श्वे एव स्थितः।

कालवर्मा लज्जया शिरः अवनमय्य उक्तवान्– "अहं पराजितः अस्मि। मां बन्दीकृत्य मदीयं राज्यं स्वीकरोतु" इति।

एतस्य प्रतिक्रियारूपेण शरणागतः

कालवर्माणं राजसभां नीत्वा पूर्णायां तस्यां तं विशेषतः सत्कृत्य उक्तवान्– "मित्र! अहं भवतः राज्यं न इच्छामि। राज्याकांक्षा भवतः विशेषतः अस्ति खलु? अतः भवदीयं राज्यं स्वीकृत्य भवान् तृप्त्या जीवतु" इति।

तदा कालवर्मा आश्चर्येण पृष्टवान्– "भवतः विषये अहम् औद्धत्येन व्यवहृतवान्। मम मूर्खताम् अविगणय्य केन उद्देशेन सत्कृतवान् भवान्?" इति।

"भवता मूर्खता न प्रदर्शिता। भवान् मूर्खः यदि स्यात् तर्हि द्वन्द्वयुद्धम् अङ्गीकृतवान् न स्यात्। जननाशः मास्तु इति एतत् मम निवेदनं पुरस्कुर्वन् भवान् मानवतां प्रदर्शितवान्। अतः एव भवन्तं सत्कृतवान्" इति उक्त्वा शरणागतः कालवर्माणं गौरवेण तदीयं राज्यं प्रति प्रेषितवान्।

एतस्याः घटनायाः अनन्तरं शरणागतस्य कीर्तिः प्रवृद्धा। सर्वे तस्य औदार्यस्य प्रशंसां कुर्वन्ति स्म।

एतदनन्तरम् अल्पे एव काले वैशालीराज्ये चौर्यं प्रवृद्धम्। एतेन पीडिताः जनाः महाराजं रक्षणं प्रार्थितवन्तः। राजा अधिकारिणः आज्ञापितवान् यत् चोरग्रहणार्थं विशेष-प्रयत्नः करणीयः इति। किन्तु अधिकारिणः चोरग्रहणे समर्थाः न जाताः। ते एतावत् ज्ञातुं शक्तवन्तः यत् चोराणां नायकस्य नाम नागभैरवः इति। नगरस्य पूर्वस्यां दिशि स्थिते अरण्ये सः निवसति इत्यपि तैः ज्ञातम्।



शरणागतराजः उद्घोषणं कारितवान् यत् यः नागभैरवं बद्ध्वा आनयति तस्मै दशसहस्रं रजतनाणकानि दीयन्ते इति। प्रजासु केचन धैर्यसाहसयुक्ताः युवकाः नागभैरवस्य बन्धनार्थं प्रयत्नं कृतवन्तः। किन्तु ते तेनैव मारिताः अभवन्।

अन्ते शरणागतराजः निश्चितवान् यत् मया एव कार्यप्रवृत्तेन भवितव्यम् इति।

एकदा शरणागतराजः व्याधस्य वेषं धृत्वा अरण्यं प्रति प्रस्थितवान्। दश सुदृढान् कार्यकुशलान् भटान् आज्ञापितवान् यत् भवन्तः मां रहस्यरूपेण अनुसरन्तु इति।

पूर्वस्यां दिशि स्थितम् अरण्यं प्रविष्टः सः मृगान् अन्विष्यन् अग्रे गतवान्। तदा



गुल्मान्तरितः कश्चन महाव्याघ्रः अकस्मात् तस्य उपरि आक्रमणम् अकरोत्। राजा खड्गं कोषात् आक्रष्टुम् अपि समयं न प्राप्तवान्। किन्तु तावता कुतश्चित् सवेगम् आगतः बाणः व्याघ्रस्य उरसि लग्नः। उन्मुखं पतितः व्याघ्रः तत्रैव प्राणान् अत्यजत्।

आजानुबाहुः कश्चन सुदृढः पुरुषः गर्वेण राज्ञः समीपम् आगत्य पृष्टवान्– "अये, कः भवान्? एतत् अरण्यम् इदम्प्रथमतया प्रविष्टः इति भाति। यतः अत्र ये मृगयार्थं तदा तदा आगच्छन्ति तान् सर्वान् जानामि अहम्। किं नाम भवतः?" इति।

"मम नाम नीलकण्ठः इति। एतत् अरण्यम् इदम्प्रथमतया आगतः अस्मि इति तु सत्यम् एव। मम प्राणान् रक्षितवतः भवतः नाम किम्?" इति पृष्टवान् शरणागतराजः।

"मम नाम नागभैरवः इति। मम नामश्रवणात् सर्वे जनाः किं, स्वयं राजा अपि भीतः भवति" इति वदन् अट्टहासं कृतवान् सः दृढकायः।

तावता वेषान्तरेण स्थितं राजानम् अनुसरन्तः आगताः सैनिकाः तत्र आगताः। राजा नेत्रसङ्केतेन तान् सूचितवान् यत् एषः नागभैरवः बद्धव्यः इति। सैनिकाः झटिति विद्युद्वेगेन आक्रम्य नागभैरवं बद्धवन्तः।

'यः मया व्याघ्रमुखात् रक्षितः सः स्वयं राजा एव' इति जानन् नागभैरवः– "महाराज! महाव्याघ्रात् अहं भवन्तं रक्षन् यत् उपकृतवान् तत् क्षणमात्रेण विस्मृत्य भवान् मां बन्धितवान्। दश जनाः आक्रम्य माम् एकं बध्नन्ति चेत् किम् आश्चर्यं तत्र? यदि भवान् धैर्यवान्, साहसी च स्यात् तर्हि मया सह खड्गयुद्धं कृत्वा मां पराजितं करोतु" इति कोपेन गर्जितवान्।

शरणागतराजः नागभैरवस्य वचनं निर्लक्ष्य– "एतं चोराग्रेसरं जागरूकतया नीत्वा कारागारे स्थापयन्तु" इति गम्भीरस्वरेण सैनिकान् आदिश्य सैनिकैः आनीतम् अश्वम् आरुह्य राजधानीं प्रति प्रस्थितवान्।

इतः एकस्य मासस्य अनन्तरं शरणागत-राजः यदा विश्रान्तिगृहे आसीत् तदा भटः कश्चन आगत्य उक्तवान्– "महाप्रभो!

त्वरया द्रष्टव्यः इति वदन् कश्चित् आगतः अस्ति। 'मदीयं परिचयं महाराजम् एव निवेदयामि' इति वदति सः'' इति।

''अस्तु, तं प्रवेशयतु'' इति उक्तवान् शरणागतराजः।

किञ्चित्कालानन्तरं काषायवस्त्रधारी जटाधारी कश्चन दृढकायः महाराजस्य समीपम् आगत्य– ''महाराज! मम नाम कपालपालः इति। अहं कश्चन मान्त्रिकः। यक्षिणीदेवीम् उद्दिश्य यज्ञः करणीयः इति सङ्कल्पितवान् अस्मि। मासं यावत् प्रतिदिनम् एकैकः बालकः देव्यै बलिरूपेण अर्पणीयः मया। तादृशानां बालकानां प्राप्तिः मान्त्रिकस्य मम न कष्टाय। तथापि महाराजद्वारा यदि एतत् कार्यं सम्पद्येत तर्हि देवी नितरां सन्तुष्टा भवेत्। भवान् एतत् साहाय्यं करोति चेत् भवन्तं समग्रस्य भूमण्डलस्य चक्रवर्तिनं करिष्यामि'' इति उक्तवान्।

एतत् वचनं श्रुत्वा क्रुद्धः शरणागतः भित्तौ स्थितं खड्गम् आकृष्य कपालपालस्य उपरि प्रयोक्तुम् उद्युक्तः। तदा कपालपालः 'फू' इति वदन् स्वस्य मन्त्रशक्त्या खड्गं भस्मीकृत्य– ''महाराज! मां धिक्कृत्य लोके कोऽपि जीवितुं न शक्नोति। मम साहाय्यं कर्तुं भवान् यत् सिद्धः न जातः तत् भवतः दुरदृष्टम्'' इति उक्त्वा वेगेन ततः निर्गतवान्।

एतदनन्तरं वैशालीराज्ये तत्र तत्र बालाः अदृश्यतां गच्छन्ति स्म। 'अत्र कपालपालस्य





एव हस्तक्षेपः अस्ति' इति निश्चितवान् शरणागतः। 'सः कपालपालः कुत्र यज्ञं कुर्वन् अस्ति इति ज्ञात्वा आगन्तव्यम्' इति आदिश्य राज्यस्य चतसृषु दिक्षु अपि गुप्तचरान् प्रेषितवान् शरणागतः।

'महति अरण्ये कुत्रचित् पर्वतगुहायां यज्ञं कुर्वन् अस्ति कपालपालः' इति वार्ताम् आनीतवन्तः गुप्तचराः।

एतत् श्रुत्वा शरणागतः एकाकी प्रस्थितवान्। पर्वतगुहां प्रविश्य पूजा-विग्रहस्य पार्श्वे स्थितस्य शिलास्तम्भस्य पृष्ठतः निलीय स्थितवान् सः।

अल्पे एव काले कपालपालः एकं रुदन्तं बालकं बलात् आनयन् मन्त्रं जपन् गुहां प्रविष्टवान्। बालकं यक्षिणीदेव्याः विग्रहस्य पादयोः समीपे शाययित्वा एकेन पादेन तिष्ठन् नेत्रे निमील्य देवीस्तोत्रं पठितुम् आरब्धवान् सः। शरणागतः मार्जारः इव विना शब्दं मन्दगत्या अग्रे गत्वा एकेन एव खड्गप्रहारेण कपालपालस्य शिरः कर्तितवान्।

अनन्तरक्षणे देवीविग्रहः दिव्यकान्त्या प्रकाशमानः जातः। सर्वासु दिक्षु घण्टानादः श्रुतः। "महावीर! भवतः धैर्यसाहसादयः अपूर्वाः। स्वीकरोतु, अजेयम् एतं दिव्यं खड्गं प्रसादरूपेण यच्छन्ती अस्मि" इति देवी उक्तवती।

शरणागतराजः तं दिव्यं खड्गं स्वीकृत्य कपालपालेन बलिनिमित्तम् आनीतं तं बालकम् उन्नीय प्रासादं प्रतिगतवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! धर्मप्रभोः शरणागतस्य व्यवहारः एव विचित्रः खलु? सः कीर्तिनिमित्तं तथा व्यवहृतवान् स्यात् वा? ससैन्यम् आगतं प्रबलं शत्रुं सौवीरराजं कालवर्माणं क्षमादानेन अनुगृह्य सत्कृतवान्। शत्रुः सदापि कण्टकायते एव खलु? एतत् न जानाति स्म वा सः? कालवर्मणा सह द्वन्द्वयुद्धं कृतवान् सः नागभैरवेण प्रार्थितः अपि द्वन्द्वयुद्धं किमर्थं निराकृतवान्? वस्तुतः सः किं धैर्यवान् न? प्राणान् रक्षितवन्तं कारागारं किमर्थं प्रेषितवान् सः? महामान्त्रिकं निलीय स्थित्वा मारितवान्। एषा वञ्चना न वा? राजोचितं

वा एतत्? एतादृशम् अपि तं यक्षिणी महावीरम् उक्तवती खलु, किमर्थम्? एतेषां सन्देहानां योग्यम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''शरणागतराजः राजनीत्यनुगुणम् एव व्यवहृतवान् अस्ति। येन केनापि प्रकारेण प्रजानां योगक्षेमनिर्वहणं राज्ञः कर्तव्यम्। अतः एव शरणागतः कालवर्मणा सह द्वन्द्वयुद्धं कृतवान्। 'पराजितः कालवर्मा कालान्तरे पुनः आक्रमणं कुर्यात् एव' इति आलोच्य सः औदार्यं प्रदर्शितवान्। कालवर्मा राज्यविस्ताराकाङ्क्षी, न तु कृतघ्नः इति जानाति स्म शरणागतः। औदार्यप्रदर्शनेन कीर्तिः तु प्राप्ता, शत्रुभीतिः अपि सर्वथा निवृत्ता।

राजा चोरेण सह युद्धं कुर्यात् इति नियमः कोऽपि नास्ति। युद्धं कृतं चेत् तत् राज्ञः दूषणम् एव। तथा करणेन तस्य एव अगौरवं भवति। यस्य वञ्चना, चौर्यं, प्राणहरणं च वृत्तिः तस्य दण्डनम् एव योग्यः राजधर्मः। प्राणरक्षणं कृतवान् इत्यतः औदार्यं प्रदर्शितं चेत् अनीतिः प्रोत्साहिता भवेत्। अतः तेन चोरः कारागारे स्थापितः। मान्त्रिकस्य सम्मुखीकरणम् असाध्यम्। एतत् सकृत् अवगतम् अस्ति शरणागतेन। अतः एव निलीय तिष्ठन् तं दुष्टं कपालपालं मारितवान् सः। प्रजाहितार्थं दुष्टः मान्त्रिकः निलीय मारितः चेत् न कोऽपि दोषः तत्र। तादृशं मान्त्रिकं मारयितुम् एकाकितया धैर्येण आगतवान्। अतः एव यक्षिणीदेवी तं 'महावीर!' इति सम्बोधितवती। शरणागतस्य सर्वे व्यवहाराः राजनीत्यनुगुणम् एव सन्ति। यदि तेन कीर्तिः प्राप्ता तर्हि सा अप्रयत्नेन आगता। वस्तुतः अपि शरणागतः प्रजाहितरक्षकः'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# उत्तराधिकारित्वम्

धर्मनन्दनः नाम राजा पूर्वं रामपुरं पालयन् आसीत्। तस्य ज्येष्ठपत्न्याः नाम सुवर्णवती इति। कनिष्ठपत्न्याः नाम तेजोवती इति। सुवर्णवत्याः पुत्रः विजयसेनः। तेजोवत्याः पुत्रः च सत्यसेनः।

गच्छति काले, धर्मनन्दनः वृद्धः जातः। 'इतः परं राज्यभारः पुत्रयोः अन्यतरस्मिन् स्थापनीयः' इति आलोचयति सः। किन्तु समस्या नाम– कस्मिन् राज्यभारः निक्षेप्तव्यः इति। यतः ज्येष्ठराज्ञ्याः पुत्रस्य विजयसेनस्य अपेक्षया अपि कनिष्ठराज्ञ्याः पुत्रः सत्यसेनः वयसा ज्येष्ठः। राज्यपरिपालनविषये उभयोः अपि समानं सामर्थ्यं दृश्यते स्म।

ज्येष्ठराज्ञ्याः आशयः आसीत् यत् ज्येष्ठराज्ञ्याः मम पुत्रः एव पट्टाभिषिक्तः भवेत् इति। वयसा ज्येष्ठः मम पुत्रः एव राज्यशासनस्य अधिकारम् अर्हति इति कनिष्ठराज्ञ्याः वादः।

राजा कस्याश्चित् अपि मनः खेदयितुं न इच्छति। किन्तु तदीयम् अन्तरङ्गं वदति स्म यत् ज्येष्ठपत्न्याः पुत्रः विजयसेनः एव राजा भवतु इति।

समस्यायाः परिहारमार्गम् अजानन् राजा धर्मनन्दनः मन्त्रिणं विद्यासागरम् आहूय– "सर्वसम्मतम् एकं मार्गं सूचयतु" इति निवेदितवान्। विजयसेनविषये स्वस्य प्रीतिम् अपि उक्तवान्।

रामपुरस्य पार्श्वे गङ्गापुरं नाम देशः अस्ति। अमरेन्द्रः तस्य देशस्य राजा। तस्य सन्तानः न आसीत्। सः राज्ञः धर्मनन्दनस्य कनिष्ठपत्न्याः तेजोवत्याः सहोदरः।

सन्तानरहितः अमरेन्द्रः चिन्तयति यत् भगिन्याः पुत्रं सत्यसेनं दत्तकरूपेण स्वीकृत्य

तं मम राज्यस्य उत्तराधिकारिणं करोमि इति। सत्यसेनः रामपुरस्यापि राजा भवतु इति तस्य आशयः आसीत्।

देशिकाचार्यः नाम पण्डितः रामपुरे निवसति स्म। समीपस्थेषु राज्येषु कौटुम्बिककविवादः, धर्मसन्देहः वा यदा भवति तदा जनाः देशिकाचार्यं पश्यन्ति स्म। तेन उच्यमानः निर्णयः सर्वसम्मतः भवति स्म। अतः कोऽपि तस्य निर्णयं विरुध्य किमपि वक्तुं धैर्यं न प्राप्नोति स्म।

स्वभागिनेयः रामपुरस्य राजा भवतु इति अमरेन्द्रस्य आशयः आसीत् खलु? अतः सः देशिकाचार्यं स्वसमीपम् आहूय आदरेण सत्कृत्य रामपुरस्य समस्यां निवेद्य– "इदानीं तस्य देशस्य उत्तराधिकारी कः भवेत्?" इति पृष्टवान्।

तदा देशिकाचार्यः उक्तवान्– "सत्यसेनः कनिष्ठराज्ञ्याः पुत्रः चेदपि ज्येष्ठराज्ञ्याः पुत्रस्य विजयसेनस्य अपेक्षया अपि वयसा ज्येष्ठः। ज्येष्ठस्य सिंहासनाधिकारः सहजः। किन्तु सः पट्टमहिष्याः पुत्रः न। अतः एषा गम्भीरा समस्या। सम्यक् आलोच्य परिहारः वक्तव्यः भवति" इति।

एतां वार्तां रामपुरस्य मन्त्री विद्यासागरः श्रुतवान्। चतुरः सः अमरेन्द्रसमीपं गत्वा उक्तवान्– "महाराज! भागिनेयः सत्यसेनः रामपुरस्य उत्तराधिकारी भवतु इति भवतः आशयः अस्ति इति मया श्रुतम्। दत्तकरूपेण




कञ्चित् इच्छति इत्यपि श्रुतम्। एतं तर्हि ज्येष्ठराज्ञ्याः पुत्रं विजयसेनं दत्तकरूपेण स्वीकरोतु। तदा इच्छाद्वयम् अपि सिध्यति। गङ्गापुरं रामपुरस्य अपेक्षया लघु। तथापि एतत् राज्यं स्वीकर्तुं, रामपुरविषयकम् अधिकारं परित्यक्तुं च अहं ज्येष्ठराज्ञीं सूचयिष्यामि। सा मम वचनं कदापि न तिरस्करोति" इति।

अमरेन्द्रः एतं प्रस्तावं न अङ्गीकृतवान्। "एतत् सर्वथा असाध्यम्। भागिनेये सति, अन्यस्य दत्तकरूपेण स्वीकारः अशक्यः एव। अतः अहं सत्यसेनम् एव दत्तकरूपेण स्वीकरिष्यामि। रामपुरस्य उत्तराधिकारित्वविषये साधकबाधकं विचिन्त्य भवन्तः एव निर्णयं कुर्वन्तु" इति

विद्यासागरम् उक्तवान् अमरेन्द्रः।

'इतः परम् अपि यदि विलम्बः क्रियेत तर्हि विजयसेनः दत्तकरूपेण स्वीकरणीयः इति विषये अनुरोधः अधिकः भवेत्' इति आलोच्य अमरेन्द्रः धर्मनन्दनम् उक्तवान् यत् अहं सत्यसेनं दत्तकरूपेण स्वीकरोमि इति।

धर्मनन्दनः एतद्विषये मन्त्रिणः अभिप्रायं पृष्टवान्। तदा मन्त्री उक्तवान्– "महाराज! एतं दत्तकप्रस्तावम् अङ्गीकरोतु भवान्। तेन भवतः विशेषलाभः भविष्यति। तत् कथम् इति कालान्तरे निवेदयिष्यामि" इति।

एतदनुगुणं धर्मनन्दनः दत्तकविषये अनुमतिं सूचितवान्। अमरेन्द्रः सत्यसेनं शास्त्रोक्तरीत्या दत्तकरूपेण स्वीकृत्य स्वस्य देशस्य युवराजम् अपि कृतवान्।

केषाञ्चित् दिनानाम् अनन्तरं धर्मनन्दनः देशिकाचार्यं प्रासादम् आनायितवान्। तदा अमरेन्द्रः अपि तत्र उपस्थितः आसीत्। सर्वेषां सम्मुखं मन्त्री देशिकाचार्यम् उक्तवान्– "श्रीमन्! रामपुरस्य युवराजः निश्चेतव्यः अस्ति। अत्रत्यां समस्यां भवान् जानाति एव। धर्मशास्त्रानुगुणं सर्वसम्मतः निर्णयः भवता सूचनीयः। तदर्थम् एव भवन्तं वयम् अत्र आनायितवन्तः" इति।

तद देशिकाचार्यः हसन् उक्तवान्– "युवराजस्वीकारः पूर्वं समस्याजनकः आसीत् इति तु सत्यम् एव। किन्तु इदानीं सत्यसेनः अमरेन्द्रराजेन दत्तकरूपेण स्वीकृतः इत्यतः समस्या स्वयं परिहृता अभवत्। सत्यसेनः इदानीम् अन्यस्य राज्यस्य युवराजः इत्यतः सः पित्रार्जितराज्ये भागं प्राप्तुं न अर्हति। अतः रामपुरस्य समग्रस्य उत्तराधिकारी विजयसेनः एव। अत्र पुनश्चिन्तनीयं किमपि नास्ति" इति।

देशिकार्यस्य वचनं न्यायसम्मतम् आसीत् इत्यतः सर्वे विना विरोधम् अङ्गीकृतवन्तः।

'पित्रार्जितराज्यस्य भागस्य प्राप्तौ सत्यसेनः अनधिकारी यत् जातः तत्र अहम् एव कारणं जातः' इति पश्चात्तापम् अनुभूतवान् अमरेन्द्रः।



# ज्ञानभाण्डागारम्

## विश्ववैचित्र्यम्

# रोमनगरीयं प्रेक्षागृहम्

रोमनगरस्थे सुविशाले प्रेक्षागृहे ४०-५० सहस्रं जनाः उपवेष्टुम् अर्हन्ति, यच्च आधुनिकं क्रीडाङ्गणम् इव भासते। नीरोवर्येण निर्मितस्य सुवर्णगृह (गोल्डन् हौस्) नामकस्य राजभवनस्य स्थाने एव एतत् निर्मितम् अस्ति।

क्रि.श. प्रथमे एतस्य प्रेक्षागृहस्य उद्घाटनम् अभवत्। रोमनगरीयाः राजकुलोत्पन्नाः अत्र रमणीयाः क्रीडाः पश्यन्तः आनन्दम् अनुभवन्ति स्म। रथस्पर्धिनः अत्र परस्परं युध्यन्ते स्म। बन्दीरूपेण स्थितानां मानवानाम् उपरि सिंहव्याघ्रादयः प्रेष्यन्ते स्म। एवं तत्र बहवः कार्यक्रमाः रक्तरञ्जिताः भयजनकाः च भवन्ति स्म। एतस्य प्रेक्षागृहस्य अवशेषाः इदानीम् अपि द्रष्टुं शक्याः।



# विज्ञानविनोदः



# समतोलनम्

### एवं कुर्वन्तु –

चित्रे यथा दर्शितं तथा एकं मुद्गरं टेप्सहाय्येन द्विहस्तपरिमाणकेन दण्डेन (यार्ड्दण्डेन) योजयन्तु। यार्ड्दण्डम् उत्पीठिकायाः उपरि स्थापयन्तु। यार्ड्दण्डस्य अधिकः भागः उत्पीठिकायाः उपरि भवतु। इदानीं प्रायः यार्ड्दण्ड-मुद्गरयोः अयं सन्निपातः (Assembly) समतोलनरूपेण तिष्ठति।

एतदनन्तरं यार्ड्दण्डस्य अन्तद्वयम् अपि अल्पेन बलेन पर्यायक्रमेण किञ्चित् नोदयन्तु। किं भवति तदा?

### किं भवति? किमर्थं च भवति?

प्रायः अयं सन्निपातः समतोलनरूपेण एव तिष्ठति ननु? किन्तु मुद्गरयुक्तम् अन्तं यदा किञ्चित् अधिकं नोदयन्ति तदा तु सन्निपातः पतति। सन्निपातस्य अधिकाधिकः भारः उत्पीठिकायाः दशायाः अधः भवति। स च भारः सन्निपातम् आकर्षति। यदा सन्निपातस्य नोदनं भवति तदा मुद्गरः दोलायमानः भवति। मुद्गरयुक्तस्य अन्तस्य नोदनं यदा भवति तदा तत् नोदनबलं मुद्गरभारेण युक्तं सत् सन्निपातं उत्पीटिकायाः दशायाः अधः आकर्षति। किन्तु यदा नोदनं स्थगितं भवति तदा मुद्गरस्य शिरः उद्गतं भवति, क्षणभ्यन्तरे सन्निपातः पूर्वतनस्थितिं प्राप्नोति। एवम् एव खलु भवति? परीक्ष्य जानन्तु तावत्।

सन्निपातस्य समतोलनस्थितिः कदा सुलभतया सिध्यति? यदा मुद्गरयुक्तस्य अन्तस्य भारः उत्पीठिकायाः दशायाः अधः भवति तदा, उत उपरि यदा भवति तदा? यदि निश्चितरूपेण न जानन्ति तर्हि कुतो वा ज्ञातुं प्रयत्नः न करणीयः?

सन्निपातस्य समतोलनस्थितिः इदानीम् इव सुलभतया यथा सिध्येत् तथा, प्रकारान्तरेण अपि यार्ड्दण्ड-मुद्गरयोः बन्धनं किं शक्यम्?

## भारतीये इतिहासे कटाक्षपातः



१. कुम्भमेलोत्सवः कुत्र कुत्र प्रचलति?
२. कः हिमालयं 'देवतात्मा' इति आहूतवान्?
३. वियेट्नाम्मध्ये निवसद्भिः भारतीयैः स्थापितस्य राज्यस्य नाम किम् आसीत्?
४. एतस्य राज्यस्य स्थापनं कदा अभवत्?
५. कियत्पर्यन्तम् एतत् स्थितम्?
६. कस्य देशस्य राजा अद्यापि 'राम' इति उपाधिना भूषितः अस्ति?
७. भारतीय-राष्ट्रिय-कांग्रेस्संस्थायाः प्रथमः अध्यक्षः कः आसीत्?
८. तस्याः संस्थायाः प्रथमम् अधिवेशनं कुत्र प्रवृत्तम्?
९. कः पारसीकः देशभक्तः भारतीय-राष्ट्रिय-कांग्रेस्-संस्थायाः द्वितीयः अध्यक्षः आसीत्?
१०. १९८९ तमे वर्षे भारतीय-राष्ट्रिय-कांग्रेस्-संस्था किंवर्षीया जाता?

(उत्तराणि ३६तमे पृष्ठे)

# परीक्षन्ताम्
# आत्मनः सामान्यज्ञानम्

१. नोबेल्पारितोषिकं कदा आरभ्य दीयमानम् अस्ति?
२. तस्य संस्थापकस्य पूर्णं नाम किम्?
३. सः कस्य देशस्य निवासी आसीत्?
४. सः किमर्थं प्रसिद्धः आसीत्?
५. इदानीम् उपयुज्यमानम् अतिविशालं राजभवनं किम्?
६. स्पुटनिक्-२ यानेन गतस्य शुनकस्य नाम किम्?
७. स्पुटनिक्-१, स्पुटनिक्-२ च कस्मिन् वर्षे आकाशं प्रति प्रेषिते?
८. रशियादेशीयायाः आकाशयानपरम्परायाः नाम किम्?
९. हिमालयस्य काञ्चनगङ्गाशिखरं सर्वप्रथमं केन आरूढम्?
१०. मौण्ट् एवरेस्ट्शिखरं कदा कः सर्वप्रथमम् आरूढवान्?

(उत्तराणि ३६तमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

– शिरः/शीर्षम्/मस्तकम् –

**हिन्दी**-सिर, **पञ्जाबी**-सिर, **उर्दू**-सर, **काश्मीरी**-हीर, **असामी**-मुर, **मराठी**-डोके, **सिन्धी**-माथो, **गुजराथी**-माथू, **बेङ्गाली**-माथा, **ओडिया**-मुण्डा/माथा, **तेलुगु**-तल, **मलयालम्**-तल, **तमिळ**-तलै, **कन्नड**-तले।

## न तथा

१. कलकत्तानगरस्था 'सौत् पैण्ट् स्कूल्' अतिविशाला।
२. स्विसर्ल्याण्ड्देशे।
३. न्यूयार्क्नगरे, मन्दिरस्य नाम 'इमन्यू-एल्' इति।

## अपि भवान् विश्वसिति?

१. यत् अतिविशाला शाला पश्चिमदेशे अस्ति इति?
२. यत् महाव्ययकारी महाविद्यालयः अमेरिकादेशे अस्ति इति?
३. यत् अतिविशालं सिनेगोग् (ज्यू मन्दिरम्) इस्रेल्देशे अस्ति इति?

# उत्तराणि

### इतिहासः

१. नासिकप्रदेशे, उज्जयिन्यां, त्रिषु वर्षेषु एकवारं, प्रयागे, हरिद्वारे, द्वादशसु वर्षेषु एकवारं प्रचलति।
२. कालिदासः।
३. चम्पा इति।
४. क्रि.श. २.
५. १५ शतकं यावत्।
६. थायूल्याण्ड् देशस्य।
७. डब्ल्यू.सि. ब्यानर्जी।
८. मुम्बईनगरे।
९. दादाभायी नवरोजी।
१०. ११४ वर्षीया। तस्याः स्थापनं १८७५ तमे वर्षे जातम्।

### सामान्यज्ञानम्

१. १९०१ तमवर्षात् आरभ्य।
२. आल्फ्रेड् नोबेल्।
३. स्वीडन्देशस्य।
४. डयनामाइट् आविष्कारविषये।
५. वेटकन्राजभवनम्। (इटली)।
६. लयका इति।
७. १९५७ तमे वर्षे।
८. ल्युनिक्-१, २, ३.
९. डा. चार्ल्स ईहवान् नेतृत्वे यु.के. देशस्य दलेन, १९५५ तमे वर्षे।
१०. १९५३ तमे वर्षे 'मे' मासस्य २१ दिनाङ्के एड्मण्ड् हिलेरी, शेर्पा तेनसिंग् च।



# नेहरूकथा — ८

१९२६ तमे वर्षे मार्चमासे जवहरलालः अस्वस्थां पत्नीं कमलां स्विसल्याण्ड् नीतवान्। ताभ्यां सह पुत्री बालिका इन्दिरा अपि गतवती। एवं परिसरपरिवर्तनकारणतः कमलायाः आरोग्ये दिने दिने प्रगतिः दृष्टा।

यदा जवहरलाल् युरोपदेशे आसीत् तदा प्रवासं कुर्वतां, श्यां जी कृष्णवीर्, राजा महेन्द्रप्रताप्, मेडम् कामा इत्यादीनां बहूनां स्वातन्त्र्यप्रतिपादकानां भारतीयानां परिचयं प्राप्य तैः सह समालोचनम् अपि कृतवान्।






१९२७ तमे वर्षे मोतीलाल नेहरू युरोप् गत्वा जवहरलालं दृष्टवान्। ते सर्वे मिलित्वा मास्को गतवन्तः। जार्वर्यस्य अधिकारस्य समाप्तेः अनन्तरं सोवियत् यूनियन् यत् स्थापितम् अभवत् तस्य दशमे वार्षिकोत्सवे ते भागं गृहीतवन्तः। एवम् अयं प्रवासः अतीव लाभकारकः सम्पन्नः।



१९२७ तमे वर्षे मदरास्नगरे कांग्रेस्सम्मेलनं यत् प्रवृत्तं ततः पूर्वं जवहरलाल् स्वदेशम् आगतवान्। कार्यदर्शी सः 'भारतं स्वतन्त्रं भवेत् एव' इति प्रबलतया प्रतिपादितवान्।

तस्मिन् एव वर्षे भारतस्य राज्याङ्गस्य कार्यस्य परिशीलनार्थम् आंग्लशासनेन सर् जान् सैमन्वर्यस्य अध्यक्षतायां एका समितिः प्रेषिता। तस्यां समित्यां भारतीयानाम् अपि सदस्यत्वं स्यात् इति कांग्रेस्संस्था असूचयत्। तथापि तस्यां समित्यां केवलम् आंग्लेयाः सदस्याः अभवन्।






अतः सैमन् समितिः तिरस्करणीया इति कांग्रेस्संस्थया निर्णीतम्। यत्र यत्र सा समितिः गता तत्र सर्वत्र भारतीयैः कृष्णपताका प्रदर्शिता। 'सैमन्! प्रतिगच्छतु" इति सर्वत्र निनादः उत्पन्नः।

लाहोर्नगरे सैमन्समितेः विरुद्धं यत् प्रदर्शनं प्रवृत्तं तस्य अध्यक्षः आसीत् लाला लजपतरायः। युवकः कश्चन आंग्लाधिकारी दण्डेन लजपतरायस्य उरसि ताडितवान्। लजपतरायः अधः अपतत्।





लजपतरायस्य विषये भारतीयानां विशेषादरः आसीत्। तस्य विषये शासनेन यत् दौर्जन्यं प्रदर्शितं तेन प्रजाः क्रुद्धाः। अल्पे एव काले लजपतरायः दिवङ्गतः अभवत्। दण्डप्रहारकारणतः एव तस्य मरणं जातम् इति बहवः विश्वसितवन्तः। जवहरलाल् अपि तथैव विश्वसिति।

शासनेन शोभायात्रायाः निषेधः कृतः। एताम् आज्ञां धिक्कृत्य जवहरः लक्नोनगरे शोभायात्रायाः व्यवस्थां कृतवान्। तत्समये आरक्षकाः दण्डेन जवहरं पृष्ठे द्विवारं ताडितवन्तः।





अनन्तरदिने एव सैमन्‌समितिः लक्नोनगरम् आगता। एतद्विरुद्धं जवहरः जनान् सम्मेलितवान्। जनाः शान्तया रीत्या गच्छन्तः आसन्। तत्समये अश्वान् आरुह्य तत्र आगताः आरक्षकाः जनान् अविवेकेन निर्दयं ताडितवन्तः।

एतत्सन्दर्भे जवहरः पुनरपि आरक्षकैः ताडितः अभवत्। तदा जवहरस्य असम्मतिम् अपि अविगणय्य तदीयाः सुहृदः तं ततः दूरं नीतवन्तः। आरक्षकाणां दुर्व्यवहारः निर्बाधं प्रवृत्तः।






पञ्जाब्नायकस्य लालालजपतरायस्य मरणं यत् प्रवृत्तम्, आरक्षकाणां स्वेच्छावृत्तिः प्रवृद्धा यत्, तद्भयेन प्रेरितः भगत्सिंहः आंग्लेयानां विरोधितया उग्रं कार्यम् आरब्धवान्। अस्मिन् प्रयत्ने तेन प्राणाः अर्पिताः च।

—(अनुवर्तते)




# हिताहितसिद्धिः

भद्रेश्वरपुरनामके कस्मिंश्चित् महाग्रामे सहदेवः महादेवः इति सहोदरौ निवसतः। एतौ उभौ अपि वैद्यौ। अभयोः अपि समाना वृत्तिः चेदपि तयोः चिकित्साक्रमे भेदः आसीत्। सहदेवः आगतान् रोगिणः श्रद्धया परीक्ष्य औषधोपचारं करोति स्म। रोगोपशमनानन्तरं तैः यत् स्वशक्त्यनुसारं दीयते तेनैव तृप्तः भवति स्म। धनिकाः निर्धनाश्चापि चिकित्सार्थं तस्य समीपम् आगच्छन्ति स्म। निर्धनानां सामान्यानां सेवया कीर्तिः प्राप्यते चेत् धनिकानां सेवया धनं प्राप्यते स्म तेन।

महादेवः तु न तथा। धनं प्रथमं पृच्छति। अतः तस्य समीपं रोगिणः अधिकतया न गच्छन्ति। तेन तस्य आयः क्रमशः न्यूनः अभवत्।

एतादृश्यां परिस्थितौ कदाचित् महादेवस्य पत्नी– "सदा भवान् विना कार्यम् एवं गृहे तिष्ठति चेत् कथम्? धनसम्पादनार्थं कोऽपि मार्गः अन्वेष्टव्यः खलु? यदि कोऽपि मार्गः न स्फुरेत् तर्हि वृक्षशाखायां बद्धया रज्ज्वा गलं बध्नातु। सर्वं समीचीनं भविष्यति" इति कोपेन उक्त्वा गृहस्य अन्तः गतवती।

एतेन नितरां खिन्नः सह धनसम्पादन-मार्गम् अपि अजानन् अरण्यं गतवान्। वनलतया रज्जुं निर्माय तस्याः एकम् अन्तं वृक्षशाखायां बद्ध्वा अपरेण अन्तेन आत्मानम् उद्बद्धुं प्रयतमानः आसीत्।

तावता पार्श्वस्थायाः गुहातः कश्चन राक्षसः आगत्य महादेवस्य कार्यं दृष्ट्वा पृष्टवान्– "अये नराधम! किं कुर्वन् अस्ति भवान्? रज्ज्वा गलं बध्नाति चेत् श्वासोच्छ्वासः कथं शक्येत?" इति।

राक्षसस्य वचनं श्रुतवतः महादेवस्य



मनसि काचित् दुरालोचना आगता। राक्षसानां समीपे प्रायः धनं भवति इति तेन श्रुतम् आसीत्। 'एतं राक्षसं कथम् अपि वञ्चयित्वा एतस्य धनं स्वायत्तीकरणीयम्' इति आलोचितवान् सः।

समीपम् आगतं राक्षसम् उक्तवान् महादेवः– "एवं रज्ज्वा आत्मानं बद्ध्वा किञ्चित्कालम् आकाशे सञ्चारः कृतः चेत् मृताः पितृपितामहादयः दृश्यन्ते। तैः सह वार्तालापेन नूतनाः विषयाः बहवः ज्ञायन्ते" इति।

एतत् श्रुत्वा आश्चर्यचकितः राक्षसः– "एवं वा? तर्हि किञ्चित् अपसरतु। मया मम पितृपितामहादयः द्रष्टव्याः" इति वदन् वनलताभिः निर्मितया रज्ज्वा गलं बद्ध्वा वृक्षम् आरुह्य उत्प्लुतवान्। आकाशे लम्बमानः अतिष्ठत् च।

राक्षसः स्थूलकायः खलु? अतः तस्य भारं वोढुम् अशक्ता शाखा क्षणमात्रेण भग्ना अभवत्। राक्षसश्च भूमौ पतितः। उपरिष्टात् पतनात् व्रणितः राक्षसः झटिति उत्थातुं न शक्तवान्। किं प्रवृत्तम् इति जानन् सः महादेवं निन्दन् पाषाण-दण्डादीन् क्षिपन् तं ताडितवान्।

'राक्षसं वञ्चयित्वा निधिं प्राप्नोमि' इति आलोच्य कार्यप्रवृत्तः महादेवः इदानीम् आपदि पतितः। पाषाणादिप्रहारैः आत्मानं रक्षन् सः ततः धावितवान्। मार्गाभावतः कण्टकगुल्मादीनाम् उपरि तेन धावनीयम् अभवत्। कण्टकैः शिलाघातैः च सः नितरां व्रणितः। एवं बहुधा व्रणितः सः कथञ्चित् गृहं प्राप्तवान्।

पत्नी एतस्य दशां दृष्ट्वा आश्चर्यचकिता। "भवतः का इयं दुरवस्था?" इति आतङ्केन पृष्टवती सा। महादेवः रुदन् प्रवृत्तं सर्वं निवेदितवान्।

एतत् श्रुत्वा महादेवस्य पत्नी सन्तोषेण उक्तवती– "यत् प्रवृत्तं तत् अस्माकं लाभाय एव अभवत्" इति।

महादेवः असमाधानेन ताम् उक्तवान्– "किं वदति भवती? यत् प्रवृत्तं तत् लाभाय इति? भवत्याः बुद्धिः भ्रष्टा तु न खलु?" इति।

"भवतः समीपं रोगिणः यत् न आगच्छन्ति तत्र कारणं भवतः अग्रजः एव। तां पीडाम् अहं कथं निवारयिष्यामि इति अद्य पश्यतु तावत्" इति उक्तवती महादेवस्य पत्नी।

अनन्तरं सा सहदेवस्य गृहं गत्वा तदीयपत्नीम् उक्तवती– "भगिनि! अरण्ये कश्चन राक्षसः मम पत्या मिलितः। तेन गोणीमितानि सुवर्णनाणकानि दत्तानि सन्ति। तानि गणयितुं न शक्नोमि। अतः कृपया प्रस्थपात्रं ददातु" इति।

एतस्याः वचने सहदेवपत्न्याः विश्वासः न जातः। 'निर्धनस्य गृहे गणयितुम् अशक्यानि सुवर्णनाणकानि कथम्?' इति आलोच्य सा गुप्तरूपेण प्रस्थपात्रस्य तले त्रिन्त्रिणीं किञ्चित् लेपयित्वा दत्तवती।

गृहं गता महादेवस्य पत्नी प्रस्थपात्रं परीक्षितवती। तया यथा चिन्तितं तथैव पात्रस्य तले तिन्त्रिणी लिप्ता आसीत्। एतेन सा नितरां सन्तुष्टा। 'सुवर्णनिमित्तं सहदेवः राक्षससमीपं गमिष्यति। क्रुद्धः राक्षसः तं खादिष्यति। तदनन्तरं सर्वे रोगिणः मम पत्युः समीपम् आगमिष्यन्ति। तदा सहजतया आयः प्रवृद्धः भवष्यिति' इति तस्याः विचारः।

महादेवस्य पत्नी गृहस्य अन्तः कथञ्चित् रक्षितम् एकं सुवर्णनाणकं पस्थपात्रस्थायाः तिन्त्रिण्याः उपरि लेपयित्वा प्रस्थपात्रं सहदेवपत्न्यै प्रत्यर्पितवती।

प्रस्थपात्रस्य अन्तः स्थितं सुवर्णनाणकं दृष्ट्वा सहदेवस्य पत्नी पतिम् उक्तवती– "अरण्यस्थेन राक्षसेन भवतः अनुजाय



गोणीमितानि सुवर्णनाणकानि दत्तानि। भवान् अपि तस्य राक्षसस्य समीपं गच्छतु। सः राक्षसः उत्तमः इति भाति। तेन दत्तेन धनेन ग्रामे विशालं चिकित्सालयं निर्माय जनानां सेवाम् इतोऽप्यधिकं कर्तुम् अर्हति खलु भवान्?" इति।

पत्न्याः सूचना सहदेवाय अरोचत। गृहात् प्रस्थितः सः अरण्ये किञ्चिद्दूरं गतवान्। तत्र राक्षसः वेदनाम् अनुभवन् पतितः आसीत्। सहदेवः तस्य समीपं गतवान्।

व्रणितं राक्षसम् उक्तवान् सः– "अहं कश्चन वैद्यः। अहं भवतः चिकित्सां करिष्यामि। इतः परं भवतः चिन्ता मास्तु। सद्यः एव भवान् स्वस्थः भविष्यति" इति।

राक्षसः दैन्येन सहदेवं पश्यन् उक्तवान्– "भवादृशेन नरेण वञ्चितः अहं वृक्षात् पतितः अभवम्" इति।

तत्र किं प्रवृत्तं स्यात् इति तर्कितवान् सहदेवः। मम अहितं भवतु इति उद्देशेन एव अनुजस्य पत्नी मां प्रेषितवती इत्यपि ज्ञातवान् सः। अनन्तरं सप्ताहपर्यन्तं सः अरण्ये एव तिष्ठन् श्रद्धया राक्षसस्य शुश्रूषां कृतवान्। राक्षसस्य सर्वे व्रणाः अपगताः।

राक्षसः सहदेवं कृतज्ञतावचनानि उक्त्वा गुहातः सुवर्णनाणकगोणीम् आनीय दत्तवान्। तया गोण्या सह सहदेवः ग्रामम् आगतवान्।

अनन्तरं सः अनुजस्य महादेवस्य गृहं गत्वा– "अनुज! अन्यस्य अहितं चिन्तितं चेत् अस्माकम् अपि अहितं सिध्यति। हितं चिन्तयामः चेत् हितम् एव सिध्यति। पश्यतु, भवान् राक्षसात् पीडितः, अहं तु सुवर्णनाणकानि प्राप्तवान्। आस्तां तावत् पूर्वतनकथा। इतः परं वा जनहितं चिन्तयन्तौ आवां सहैव सुखेन जीवाव" इति उक्त्वा सुवर्णप्राप्तिं विस्तरेण निवेदितवान्।

अग्रजस्य बोधनेन विवेकं प्राप्य अनुजः जनहितं कार्यं कर्तुं सङ्कल्पितवान्। अनन्तरं तौ ग्रामे विशालं चिकित्सालयं निर्माय निर्धनानां चिकित्सां निश्शुल्कं कुर्वन्तौ सत्कीर्तिं प्राप्य सुखेन जीवितवन्तौ।






राक्षसचक्रवर्तिनः बलेः पुत्रः एव बाणासुरः। शोणपुरं तस्य राजधानी। सहस्रबाहुः बाणासुरः बाल्ये स्वेच्छया सञ्चरन् आसीत्। एवं सञ्चरन् सः कदाचित् मणिमाणिक्यादिभिः शोभमानस्य कुबेरपर्वतस्य गुहामन्दिरे क्रीडन्तं कुमारस्वामिनं, तं दृष्ट्वा परमसन्तोषम् अनुभवन्तौ शिवं पार्वतीं च दृष्टवान्।

कुमारस्वामिनः मुखानि, हस्तान्, शरीरकान्तिम्, अपूर्वं तेजः च दृष्ट्वा आकृष्टः बाणः चिन्तितवान्– 'महतः तपसः फलरूपेण अयं शिवस्य पुत्रः जातः स्यात्। अहम् अपि तपसा शिवं सन्तोष्य एतादृशं भाग्यविशेषं प्राप्नोमि' इति।

ततः अल्पे एव काले तपसः निमित्तम् उपविष्टः बाणः एकाग्रचित्तः सन् अनन्यभक्त्या बहूनि वर्षाणि यावत् शिवं ध्यायन् आराधनां कृतवान्। तस्य तपसा तुष्टः शिवः पार्वत्या सह प्रत्यक्षीभूय मन्दहासपूर्वकम् उक्तवान्– "वत्स! अपेक्षितं प्रार्थयतु। दास्यामि" इति।

बाणः भक्त्या करौ योजयित्वा उक्तवान्– "देव! अहं भवतोः पुत्रः भवितुम् इच्छामि। तादृशेन वरेण माम् अनुगृह्णातु" इति।

शिवः एतत् अङ्गीकृत्य पार्वतीम् उक्तवान्– "देवि! अयं बलेः पुत्रः बाणः। कुमारस्वामिनः अनुजः भविष्यति। एतं पुत्ररूपेण अङ्गीकरोतु" इति।

अनन्तरं समस्तसम्पदा युक्तं शोणपुरं राजधानीरूपेण तस्मै दत्त्वा शिवः उक्तवान्-



"भवदीयम् एतत् नगरं स्वयम् अहं रक्षामि। भवन्तं जेतुं कोऽपि न शक्नोति। अतः निश्चिन्तः भवतु" इति।

कुमारस्वामी बाणाय एकं मयूरं दत्त्वा उक्तवान्– "एषः मयूरः भवतः वाहनं, ध्वजः च भवतु" इति।

बाणस्य इदानीं कुतश्चित् अपि भीतिः नास्ति। 'मम रक्षणभारं सदा शिवः निर्वहति' इति चिन्तयन् सः गर्वेण व्यवहरति। तदीया राक्षसी प्रवृत्तिः जागरिता अभवत्। सः देवान्, गन्धर्वान्, नागान्, खेचरगणान् च एकैकशः जित्वा समस्तं लोकं स्वाधीनं कृतवान्। तथापि तस्य युद्धाकाङ्क्षा न शान्ता। युद्धं विना स्थातुं सः न शक्नोति। प्रतियोद्धा कोऽपि नास्ति इत्यतः सः परितपति। क्षणः युगम् इव भासते स्म।

बहूनि वर्षाणि एवं युद्धं विना एव गतानि। युद्धार्थं तस्य बाहवः सदा स्फुरन्ति। किन्तु अवकाशः एव नास्ति। अन्ते सः शिवसमीपं गत्वा साष्टाङ्गं नमस्कृत्य प्रार्थितवान्– "देव! इदानीं लोके प्रतियोद्धा एव न दृष्टः मया। मया पराजिताः देवाः मुखम् अपि न प्रदर्शयन्ति। मां सम्मुखीकर्तुं समर्थः वीरः लोके कोऽपि न दृश्यते। बाहवः सर्वे व्यर्थाः सञ्जाताः। प्रदर्शयितुम् अशक्येन पराक्रमेण किं प्रयोजनम्? अतः पुनः युद्धार्थम् अवकाशः कदा भविष्यति इति वदतु। युद्धार्थं योग्यम् एकम् अवकाशं कल्पयतु कृपया" इति।

बाणासुरस्य परिस्थितिं दृष्ट्वा हसन् शिवः उक्तवान्– "भवता यत् प्रार्थ्यते तस्य निराकरणम् उचितं न खलु? अतः एव पूर्वं वरेण अनुगृहीतवान्। इदानीम् अपि तथैव करोमि। भवतः मयूरध्वजः यदा विना कारणं पतिष्यति तदा युद्धार्थं समुचितः अवकाशः प्राप्तः इति भावयतु। भवतः युद्धाकाङ्क्षा येन तृप्ता भवेत् तादृशः अवकाशः लप्स्यते" इति।

"हन्त! जीवितः अहम्!" इति उद्गारं प्रकटयन् बाणः शिवं पुनरपि नमस्कृत्य गृहं गतवान्। मयूरध्वजः यत्र अस्ति तत्र उपविश्य प्रमुखान् सर्वान् आह्वातुं दूतान् आज्ञापितवान्। त्वरया उपस्थितं

मुख्यमन्त्रिणं कुम्भाण्डं पृष्टवान् सः– "मया अपूर्वा वार्ता आनीता। सा का इति जानाति वा भवान्?" इति।

तदा कुम्भाण्डः उक्तवान्– "भवतः मुखदर्शनात् ज्ञायते यत् वार्ता तु अत्यपूर्वा इति। किन्तु का सा इति स्पष्टं न जानामि। शिवः नूतनेन वरेण अनुगृहीतवान् वा? इन्द्रं पातालं प्रेषयित्वा भवन्तं देवसिंहासने अभिषिक्तवान् वा सः? अथवा कृष्णस्य जयार्थं कमपि उत्तमम् उपायं सूचितवान् वा? तथा यदि स्यात् तर्हि परमं सौभाग्यं भवतः! तदा विष्णोः वञ्चनायाः कारणतः पातालं गतः धर्मात्मा भवतः पिता मुक्तिं प्राप्स्यति। तेन वयं सर्वे धन्याः भवेम। भवतः सन्तोषं पश्यामि चेत् तादृशम् अपूर्वं वरं प्राप्तवान् भवान् इति भाति" इति।

कुम्भाण्डस्य वचनानि श्रुत्वा बाणः हसन् उक्तवान्- "तादृशम् अपूर्वं वरं किमपि न प्राप्तवान् अहम्। युद्धं विना अहं खेदम् अनुभवन् आसं खलु? युद्धार्थम् अवकाशः लप्स्यते इति शिवेन उक्तम्। मम मयूरध्वजः यदा विनाकारणं पतिष्यति तदा युद्धावकाशः स्वयम् आगमिष्यति इति सूचितं तेन। एतत् वक्तुम् एव भवन्तम् अत्र आहूतवान्। भवान् तु अन्यथा तर्कयन् अस्ति" इति।

तदा दिग्भ्रान्तः कुम्भाण्डः– "हा हन्त! विनाशकरं वरं खलु एतत्! शिवं सम्प्रार्थ्य एतत् आनीतवान् वा भवान्? पुण्यात्मनः प्रह्लादस्य कुलस्य कीदृशी दुर्गतिः आगता !" इति उद्गारं प्रकटितवान्।





प्रतिस्पर्धिनः अभावात् एतादृशं वरं प्रार्थितवान्। गर्वातिशयस्य फलम् एतत्। उन्नतं स्थानं प्राप्य अपि अयं राक्षसबुद्धिं प्रदर्शयन् स्वस्य नाशं स्वयं स्वागतीकृतवान्। एतादृशे सन्दर्भे अपि सन्तोषः एतस्य। अहो मूर्खता! विनाशकाले विपरीतबुद्धिः इति वचनं सत्यम् एव। विनाशकालः सन्निहितः इति तु निश्चितम्। विना कारणम् उत्पाताः न सम्भवन्ति। शिवः कुमारस्वामी च एतस्य नगरस्य रक्षणं कुरुतः चेदपि दैवनिर्णीतं युद्धं निवारयितुं को वा शक्नुयात्? किन्तु बाणं सम्मुखीकर्तुं कः समर्थः अस्ति लोके, ऋते विष्णोः? विना कारणं विष्णुः कथं वा युद्धं कुर्यात्? युद्धस्य फलं किं भवेत्?" इति बहुधा चिन्तयति।

बाणः एतान् उत्पातान् दृष्ट्वा अपि किञ्चिदपि न विचलितः। स्वयं विष्णुः आगतः चेदपि तं सम्मुखीकर्तुं सिद्धः अस्ति बाणः।

बाणस्य उषा नाम पुत्री आसीत्। चन्द्रकलाभिः एव निर्मिता इव सा सौन्दर्यस्य खनी आसीत्। कुम्भाण्डस्य पुत्री चित्ररेखा तस्याः प्रियसखी। उषा पितुः आदेशानुसारं योग्यस्य पत्युः प्राप्त्यर्थं पार्वतीदेवीं परमया भक्त्या पूजयन्ती आसीत्।

चैत्रमासः आगतः। वसन्तशोभा सर्वत्र प्रसृता। शोणपुरे निवसन् शिवः पार्वत्या सह वनविहारं कर्तुम् इच्छन् अनेकाः

एतस्मिन् एव समये वज्रायुधेन पातितः पर्वतः इव मयूरध्वजस्तम्भः ध्वजेन सह सशब्दं पतितः। बाणे कुम्भाण्डे च पश्यति एव, एषा घटना प्रवृत्ता आसीत्।

'स्वस्य अपेक्षा पूरिता भविष्यति' इति आलोचयन् बाणः नितरां सन्तुष्टः। तस्मिन् एव क्षणे भूमिः कम्पिता अभवत्। आकाशे धूमकेतुः दृष्टः। प्रचण्डः वायुः अकस्मात् उत्पन्नः। शोणपुरे रक्तवृष्टिः जाता। एवं बहवः उत्पाताः प्रवृत्ताः। किन्तु बाणः एतत् सर्वथा न लक्षितवान्।

एतानि दुःश्शकुनानि दृष्ट्वा भीतः कुम्भाण्डः– "अहो! कीदृशं विपरीतं वरं पृष्टवान् अयं बाणः! त्रिलोकीं जितवान् अयं



अप्सरस्स्त्रियः गन्धर्वस्त्रियः च आनायितवान्। ताः सर्वाः पार्वतीरूपं धर्तुम् आदिष्टवान् सः। शोणपुरस्य बहिर्भागे प्रवहन्त्याः मन्दाकिन्याः तीरे उद्यानेषु क्रीडाविनोदाः विहाराः च प्रवृत्ताः। नृत्यगानादयः निरन्तरं प्रवृत्ताः।

महता उत्साहेन प्रवर्तमाने एतस्मिन् विहारोत्सवे शिवेन आलिङ्गितां पार्वतीम्, अकस्मात् तत्र आगता उषा दृष्टवती। 'माम् अपि मम पतिः कदा एवम् आलिङ्गेत्?' इति सा मनसि एव चिन्तितवती। 'मम पिता तु त्रिलोकीचक्रवर्ती। साक्षात् पार्वतीदेवी एव अस्माकं कुलदेवी अस्ति। योग्यस्य पत्युः प्राप्त्यर्थम् अहं प्रतिदिनम् अपि देवीं प्रार्थयन्ती अस्मि। तथापि देवी मम आशां किमर्थं न पूरयति?' इति चिन्तयन्ती स्थितवती सा।

उषायाः इङ्गितं ज्ञातवती पार्वतीदेवी। सा हस्तसङ्केतेन उषां स्वसमीपम् आहूय– "बाले! भवत्याः मनसि यत् प्रवर्तते तत् वयोनुगुणम् अस्ति। कन्यका योग्यम् पतिम् अभिलषते चेत् तत्र न कोऽपि दोषः। अचिरात् एव भवती योग्यं पतिं प्राप्स्यति। शिवस्य आलिङ्गनेन मया यत् सुखम् अनुभूयते तादृशम् एव सुखं भवती अपि प्राप्स्यति। आगामिन्यां वैशाखशुक्लद्वादश्यां रात्रौ भवती स्वप्ने कञ्चित् सुन्दरं पुरुषं द्रक्ष्यति। सः एव भवत्याः पतिः भविष्यति" इति उक्तवती।

उषा सन्तोषेण लज्जया च पार्वतीं नमस्कृत्य ततः गतवती।

पार्वत्या यथा सूचितं तथैव प्रवृत्तम्। वैशाखशुक्लद्वादश्यां रात्रौ उषा सखीभिः सह चन्द्रशालायां स्थिते शयनागारे सुखमयनिद्रायां लीना आसीत्। तदा तया कश्चन स्वप्नः दृष्टः। स्वप्ने कश्चित् सुन्दरः तस्याः समीपम् आगत्य तया सह सम्भाषणं कुर्वन् तस्याः हस्तं गृहीतवान्।

आश्चर्यम् अनुभवन्ती उषा जागरिता अभवत्। यदा सा नेत्रे उद्घाट्य दृष्टवती तदा तया कोऽपि न दृष्टः। सख्यः सर्वाः निद्रायाम् आसन्। यत् दृष्टं तत् वास्तविकम् इव भासते स्म। 'समीपे कोऽपि स्यात् वा?' इति सा



परितः दृष्टिं प्रसारितवती। लज्जया, भीत्या, आनन्देन च तस्याः रोमाञ्चः जातः। पार्वतीदेव्या यत् उक्तं तत् सर्वथा विस्मृतवती आसीत् सा। 'स्वप्नसम्पर्कतः मम पितुः वंशस्य अगौरवं सिद्धम्' इति चिन्तयन्ती सा रोदनम् आरब्धवती।

रोदनं श्रुत्वा सर्वाः सख्यः जागरणं प्राप्य तां परितः स्थितवत्यः। चित्ररेखा तस्याः पार्श्वे एव उपविश्य– "भीतिः मास्तु सखि! किमर्थं रोदिति भवती? त्रिलोकीम् अपि कम्पयितुं समर्थः बाणासुरः भवत्याः पिता इति भवती विस्मृतवती वा?" इति पृच्छन्ती सा आञ्चलेन उषायाः अश्रूणि मार्जयित्वा सान्त्वनं कृतवती।

उषा स्वप्ने जातं पुरुषदर्शनं निवेद्य गद्गदस्वरेण उक्तवती– "स्वप्ने यत् दृष्टं तत् वास्तविकतया सम्पन्नम् इत्येव भासते मम। अहं कलङ्किता अभवम्। सखि! मत्तः वंशस्य गौरवं नष्टम्" इति।

तदा चित्ररेखा पूर्वं पार्वतीदेव्या यत् उक्तं तत् स्मारयन्ती उक्तवती– "अद्य वैशाखशुक्लद्वादशी। अद्य स्वप्ने यः दृष्टः सः एव भवत्याः भावी पतिः। पार्वत्याः वचनं मिथ्या न भवेत् एव। सन्तोषे प्राप्तव्ये, मूढा भवती दुःखम् अनुभवति खलु?" इति।

एतत् श्रुत्वा उषा पूर्वतनं सर्वं स्मृतवती। राहुमुक्तः चन्द्रः इव अभवत् तस्याः मुखम्। "सखि! चन्द्ररेखे! मम चिन्तां क्षणमात्रेण अपनीतवती खलु भवती? योग्यस्य पत्युः दर्शनोपायम् अपि भवती एव सूचयतु। स्वप्ने दृष्टस्य आकरं शब्दैः वर्णयितुं न शक्नोमि चेदपि तत् रूपं तु स्फुटतया अस्ति मम मनःपटले। सः कथञ्चित् अन्वेष्टव्यः भवत्या। भवत्यां समग्रं भारं निक्षिप्तवती अस्मि" इति उक्तवती उषा।

"सखि! मयि स्थितायां, किमर्थं चिन्ता भवत्याः? भवत्याः सन्तोषणार्थम् एव खलु अस्मि अहम्? स्वप्ने दृष्टस्य अन्वेषणं तावत् क्लेशकरं न। किन्तु सः कः इति प्रथमं ज्ञातव्यं खलु? तत् कथम् इत्येव अहं चिन्तयन्ती अस्मि। भवती वदति– तं शब्दैः वर्णयितुम् एव न शक्नोमि इति। अहं तु तं न दृष्टवती

एव। स्वप्ने आगतः सः स्वनाम अपि न उक्तवान् वा?" इति दीर्घालोचनायां मग्ना चित्ररेखा पृष्टवती।

"प्रियसखि! नामकुलादिकं किमपि न उक्तं तेन। कमपि उपायं चिन्तयतु भवती। मम प्राणसमा खलु भवती? मयि दयां प्रदर्शयतु कृपया" इति उक्तवती उषा।

"देवि! व्यथा मास्तु। द्वित्रेषु दिनेषु प्रियतमस्य अभिज्ञानार्थम् अन्वेषणार्थं च उपायं करिष्यामि। पार्वतीदेव्याः अनुग्रहे स्थिते किम् असाध्यम्? भवत्याः इच्छा निश्चयेन सफला भविष्यति" इति उक्तवती चित्ररेखा।

चित्ररेखा अन्याः सखीः उक्तवती– "भवत्यः एतां जागरूकतया पश्यन्तु" इति। अनन्तरं स्वयम् एकान्ते उपविश्य कूर्चं वर्णं च स्वीकृत्य चित्राणि लेखितुम् आरब्धवती। पञ्चषेषु दिनेषु प्रपञ्चे स्थितानां सर्वेषां सुन्दरपुरुषाणां चित्रं लिखितवती सा। दर्शनमात्रेण एव तत्तस्य ऐश्वर्यगुणादयः यथा स्फुटं दृश्येरन् तथा चित्रितवती आसीत् सा।

अनन्तरं तानि चित्राणि सर्वाणि उषायाः समीपं नीत्वा सा उक्तवती– "सखि! प्रपञ्चे स्थितानां सर्वेषां तरुणानां चित्राणि महता प्रयासेन यथावत् सज्जीकृतवती अस्मि। देव-दानव-मानवाः सर्वे अत्र सन्ति। भवत्या स्वप्ने यः दृष्टः सः एतेषु अन्यतमः स्यात् एव। दृष्ट्वा वदतु तावत्" इति।

उषा एकैकं चित्रं दृष्ट्वा पार्श्वे स्थापयति। यादवप्रमुखं कृष्णं दृष्ट्वा सा आश्चर्यम् अनुभूतवती। स्वप्ने यः दृष्टः तस्य एतस्य च साम्यं विशेषतः दृश्यते स्म। प्रद्युम्नस्य चित्रं दृष्टवत्याः तस्याः ततोऽपि अधिकम् आश्चर्यम्! यतः अत्र साम्यम् पूर्वापेक्षया अधिकम्! अनन्तरं सा अनिरुद्धस्य चित्रपटम् उन्नीतवती। चित्रं पश्यन्ती सा भावपरवशा जाता। आत्मानं विस्मृत्य लज्जया अनुरागेण सा अनिरुद्धस्य चित्रं पश्यति। 'उषया स्वप्ने दृष्टः अनिरुद्धः एव' इति निश्चितवती चित्ररेखा।





# गोपितं मरणशासनम्

प्रायः पञ्चशतवर्षेभ्यः पूर्वम् इति भाति, चीनादेशे 'नी षा-चियेन्' नामकः कश्चन राजप्रतिनिधिः आसीत्। सः प्रभूतं धनं सम्पाद्य उत्तमं गृहं निर्मितवान्। समृद्धानि क्षेत्राणि अपि क्रीतवान्। तस्य षान्-ची नामकः एकः एव पुत्रः आसीत्। पुत्रस्य विवाहस्य अनन्तरम् अल्पे एव काले चियेनस्य पत्नी दिवङ्गता।

'इतः परं राजसेवा मास्तु' इति आलोच्य नी षा-चियेन् निवृत्त्यर्हता न आगता चेदपि स्वयम् उद्योगात् निवृत्तः अभवत्।

इदानीं सः गृहे एव तिष्ठन् कृष्यादीनाम् अवेक्षणं कुर्वन् सुखेन जीवति। कदाचित् सः उत्साहेन स्वयम् अपि कृषिकार्ये निमग्नः भवति।

उद्योगसमये शारीरकपरिश्रमः तस्य न आसीत्। कृषिकार्यसमये तु परिश्रमः भवति स्म एव। अतः तदीयं शरीरं वार्धके अपि दृढं जातम्। इदानीं तस्य दर्शनेन तदीयं वार्धक्यं न ज्ञायते स्म।

कदाचित् षान्-ची पितरम् उक्तवान्– "भवान् व्यवहारादिकं परिशीलयन् किमर्थं वृथा क्लेशम् अनुभवति? वयं स्मः खलु? सर्वं पश्यामः। भवान् विश्रान्तिसुखम् अनुभवन् सुखेन तिष्ठतु" इति।

"यावत् मम शरीरे प्राणाः तिष्ठन्ति तावत् अहं व्यवहारादिकं परिशीलयामि। अहं समर्थः एव अस्मि। समययापनार्थं मया किमपि करणीयम् एव खलु?" इति उक्तवान् नी षा-चियेन्।

याजमान्यं न दत्तम् इति पुत्रस्य असमाधानम् आसीत् एव। तेनैव सह नी षा-चियेनस्य अपरं कार्यं पुत्रस्य कोपम् अवर्धयत्। तच्च–

"चीनादेशीया जानपदकथा"



कदाचित् नी षा-चियेन् वायुविहारार्थं गच्छन् आसीत्। तदा समुद्रतीरे स्थिता षोडशवर्षीया कन्या मेया, तस्याः पितामही च तेन दृष्टे। मातापितृविहीनां मेयां पितामही एव प्रीत्या पालयन्ती आसीत्। मेया रूपेण अप्सराः इव दृश्यते स्म।

मेयायाः सौन्दर्यातिशयेन आकृष्टः अभवत् नी षा-चियेन्। सः तां वृद्धाम् उक्तवान्– "अहम् एतां परिणेतुम् इच्छामि। यदि एषा मह्यं दीयेत तर्हि भवती आजीवनं सुखेन स्थास्यति। एषा अपि महतः गृहस्य स्वामिनी सती महाराज्ञी इव स्थास्यति" इति।

एतेन सन्तुष्टा सा वृद्धा एतद्विषये पौत्र्याः आशयं पृष्टवती। तया अङ्गीकारः सूचितः। अतः तां परिणीय तया सहैव गृहम् आगतवान् नी षा-चियेन्। 'मेया अल्पवयस्का चेदपि बुद्धिमती, समर्था च। एतां परिणयता मया युक्तम् एव आचरितम्' इति चिन्तितवान् नी षा-चियेन्।

किन्तु वार्धके पित्रा मेया परिणीता यत् तेन षान्-ची तस्य पत्नी च खिन्नौ। 'मेया कापालिका स्यात्। सा कुटिलोपायेन नी षा-चियेनं वशीकृत्य तं परिणीतवती। वंशगौरवं धूलिसात्कृतवती च' इति भावितवन्तौ तौ। अतः तौ कटुवचनैः मेयां सदा पीडयतः।

अल्पे एव काले मेया गर्भिणी जाता। योग्ये काले पुत्रं प्रसूतवती च। पुत्रस्य नाम षान्-षू इति निश्चितम्। अनुजस्य जन्मना षान्-ची नितरां खिन्नः। 'एतस्य सर्वस्य कारणम् एषा विमाता मेया एव' इति भावयन् सः मेयां सदा निन्दति।

षान्-चीव्यवहाराः सर्वे पित्रा ज्ञायन्ते एव। तथापि सः सहनया व्यवहरति। 'पित्रार्जितसम्पत्तिं विभक्तुम् अनिच्छन् षान्-ची शिशोः हानिं कामपि कुर्यात्' इति आतङ्कम् अनुभवति नी षा-चियेन्।

षान्-षू यदा पञ्चवर्षीयः जातः तदा सः गुरोः समीपं प्रेषितः। तस्य उपाध्यायस्य सकाशात् एव षान्-चीपुत्रः अपि विद्याम् अभ्यस्यति।

'मम पुत्रस्य अनुजस्य च मध्ये मैत्री

कदाचित् वर्धेत' इति आलोच्य षान्-ची स्वपुत्रम् अन्यस्य गुरोः समीपं प्रेषितवान्।

एतत् असहमानः नी षा-चियेन् ज्येष्ठं पुत्रं सम्यक् तर्जयितुम् इष्टवान्। किन्तु 'अविवेकिनः तर्जनेन किमपि प्रयोजनं न भवेत्' इति आलोच्य कोपम् अन्तः निगृहीतवान्।

अल्पे एव काले नी षा-चियेन् पक्षवातरोगेण पीडितः सन् शय्याम् आश्रितवान्।

वैद्यः आगत्य सम्यक् परीक्ष्य उक्तवान्– "एतस्य औषधोपचारः कोऽपि नास्ति। एषः एवम् एव कानिचन दिनानि तिष्ठेत्, तावदेव" इति।

'पिता इतः परम् उत्थाय गन्तुं न शक्नोति' इति जानन् षान्-ची अधिकारदर्पं प्रदर्शयितुम् आरब्धवान्। आत्मानं यजमानं भावयन् अल्पं लोपं कृतवन्तम् अपि कर्मकरं सम्यक् निन्दन् ताडयति स्म सः। मेया, षान्-षू च 'इतः परम् आवयोः का गतिः?' इति चिन्तयन्तौ वृद्धस्य मञ्चस्य पार्श्वे उपविश्य अश्रूणि स्रावयतः।

'स्वस्य अन्तिमकालः सन्निहितः' इति ज्ञातवान् नी षा-चियेन्। कदाचित् सः ज्येष्ठपुत्रम् आहूय, एकं पुस्तकं दत्त्वा उक्तवान्– "वत्स! भवतः अनुजः षान्-षू इतोऽपि पञ्चवर्षीयः बालः। तस्य पोषणं विद्याभ्यासव्यवस्था च भवतः दायित्वम्। तस्य माता अपि कृष्यादिव्यवहारं निर्वोढुं न समर्था। अतः अहं तयोः कृते इदानीं भागं न





दत्तवान्। तौ भवतः वशे भवतः। षान्-षू यदा प्रौढः भविष्यति तदा योग्यां कन्याम् अन्विष्य तस्य विवाहं निर्वर्तयतु। एकर-दशकमितां भूमिम्, एकं लघु गृहं च तस्मै ददातु। मम उभौ अपि पुत्रौ सुखेन जीवेताम् इति मम इच्छा। विभागसम्बन्धिनः सर्वे विषयाः अस्मिन् पुस्तके लिखिताः सन्ति। भवतः विमाता यदि द्वितीयं विवाहम् इच्छेत् तर्हि सा अभिलषितं परिणयतु नाम। विधवारूपेण पुत्रेण सह एव तिष्ठामि इति वदति चेत् द्वितीयविवाहविषये अनुरोधः अपि मास्तु। मम वचनम् अक्षरशः पालयति चेत् मम आत्मा तृप्तः तिष्ठेत्'' इति।

''तात! भवतः काऽपि चिन्ता मास्तु। भवतः वचनम् अक्षरशः पालयिष्यामि'' इति वदन् षान्-ची पित्रा दत्तं पुस्तकं स्वीकृत्य सन्तोषेण ततः गतवान्।

तस्य गमनानन्तरं मेया अश्रूणि स्रावयन्ती पतिम् उक्तवती– ''सर्वं ज्येष्ठाय पुत्राय समर्पितं खलु? इतः परं षान्-षू अनाथः भविष्यति किम्? मम जीवनं कथम्? एतद्विषये भवता किञ्चिदपि न चिन्तितम् एव'' इति।

''भवती वस्तुस्थितिं न जानाति। षान्-ची विश्वासार्हः न। यदि अहं सम्पत्तिं विभज्य दद्यां तर्हि सः अनुजं यमपुरीं प्रेषयित्वा सर्वं वशीकुर्यात्। अतः एव तदीया असूया यथा न वर्धेत तथा समग्रं तस्मै दत्तम्। भवती अननुभविनी इत्यतः भवत्पुत्रस्य रक्षणम् अपि तदधीनं कृतम्। मम इहलोकात् निर्गमनस्य अनन्तरं भवती अनुरूपं तरुणं कञ्चित् परिणीय सुखेन जीवतु'' इति उक्तवान् नी षा-चियेन्।

''अहम् अन्यं परिणीय पुत्रात् दूरं गच्छेयम् इति चिन्तयति वा भवान्? कदापि न। सुखाय वा भवतु, दुःखाय वा, पुत्रेण सहैव स्थास्यामि। मम पुत्रम् अनाथं न करोमि'' इति उक्तवती मेया।

'मेया पुत्ररक्षणे बद्धादरा' इति निश्चित्य नी षा-चियेन्– ''भवत्याः पुत्रस्य च काऽपि न्यूनता यथा न स्यात् तथा करिष्यामि'' इति पत्नीम् उक्त्वा उपधानस्य अधस्तात्

पुटीकृतम् एकं चित्रपटं स्वीकृत्य तस्यै दत्तवान्।

तत् स्वीकुर्वती मेया पतिं पृष्टवती–"किम् एतत्?" इति।

"इदं मम चित्रम्। अत्र एकं रहस्यं निगूढम् अस्ति। कस्मैचित् अपि अप्रदर्शयन्ती भवती एतत् जागरूकतया रक्षतु। यदा भवत्याः पुत्रः प्राप्तवयस्कः भविष्यति तदा षान्-ची साहाय्यं निराकरिष्यति चेत् एतत् चित्रं भवती, बुद्धिमान् न्यायपक्षपाती न्यायाधीशः यदा एतं प्रदेशम् आगमिष्यति तदा तस्मै प्रदर्शयतु। एतत् चित्रं परिशील्य गूढार्थं ज्ञात्वा सः भवत्या भवत्पुत्रेण च न्याय्यं यथा प्राप्येत तथा निर्णयं श्रावयिष्यति" इति उक्तवान् नी षा-चियेन्।

एतदनन्तरम् अल्पे एव काले नी षा-चियेन् मरणं प्राप्तवान्।

पितुः मरणानन्तरं षान्-ची गृहस्य सर्वाः कुञ्चिकाः स्वायत्तीकृतवान्। पितुः अन्त्यक्रियादिकं समाप्य षान्-ची, गृहं समीकरणीयम् इति वदन् विमातरम् अनुजं च गृहसमीपे स्थिते लघुकुटीरे स्थापितवान्। तयोः सेवार्थम् एकाम् अल्पवयस्कां बालिकां नियोजितवान्।

प्रतिदिनं सः तत्तद्दिनस्य कृते यावत् आवश्यकं तावत् एव तण्डुलं कुटीरं प्रति प्रेषयति। दालं शाकादिकं वा न प्रेषयति एव। अन्यव्ययार्थम् अपेक्षितं धनं मेया विमातृपुत्रं न प्रार्थयते। सा सीवनं सम्यक् जानाति स्म। तद्द्वारा अल्पं धनं सम्पाद्य जीवननिर्वहणं करोति स्म।

षान्-ची स्वकीयम् एकं पुरुषं मेयासमीपं सम्प्रेष्य तद्द्वारा वार्ता प्रेषितवान् यत् भवती अन्यं परिणेष्यति चेत् वरम् इति।

विवाहघटकान् तस्याः कुटीरं प्रति प्रेषयन् ताम् अङ्गीकारयितुं बहुधा प्रयत्नं कृतवान्।

किन्तु पुनर्विवाहप्रस्तावं मेया सर्वथा निराकृतवती। एतदनन्तरं षान्-ची तयोः विषये चिन्तनम् एव परित्यक्तवान्।

– (अग्रिमसञ्चिकायां समाप्तिः।)





# योग्यः परिहारः

कस्याश्चित् नद्याः तीरे वृक्षमये सुन्दरे प्रदेशे सोमशेखरो नाम कश्चन पण्डितः गुरुकुलं चालयति स्म। तत्र छात्राणां वसत्यर्थम् उत्तमा व्यवस्था आसीत्। सोमशेखरस्य पाठनकौशलम् अपि अपूर्वम् एव आसीत्। अतः तस्मिन् गुरुकुले अध्ययनं कर्तुं सर्वे छात्राः उत्साहिनः भवन्ति स्म।

तस्मिन् गुरुकुले बहवः विद्यार्थिनः आसन्। तेषु राधारमणः अन्यतमः। तस्मिन् सोमशेखरस्य विशेषप्रीतिः आसीत्। यतः राधारमणः सकृद्ग्राही, तीक्ष्णमतिः। तस्य व्यवहारः अपि मधुरः। उत्तमे छात्रे गुरोः प्रीतिः सहजा एव खलु?

राधारमणः कदापि व्यर्थं कालहरणं न करोति। इतरे छात्राः जल्पन्तः भवन्ति चेत् एषः ग्रन्थपरिशीलनं कुर्वन् भवति। गुरोः बोधनं श्रद्धया शृणोति सः। सायङ्काले नदीतीरे उपविश्य तत्तद्दिनस्य पाठस्य मननं कुर्वन् विषयं सम्यक् अवगच्छति।

राधारमणस्य एतत् वैशिष्ट्यम् असहमानौ रामभद्रः कृष्णदीक्षितः च तस्मै असूयतः स्म। तौ स्वभावेन दुष्टौ न, तथापि गुरुः राधारमणे यत् आदरातिशयं प्रदर्शयति तेन तौ नितरां खिन्नौ कुपितौ च भवतः स्म।

कदाचित् गुरुः सोमशेखरः पाठनं समाप्य वृक्षस्य अधः उपविश्य विश्रान्तिसुखम् अनुभवन् आसीत्।

तदा रामभद्रः कृष्णदीक्षितः च तत्र गत्वा उक्तवन्तौ– "श्रीमन्! यः बुद्धिमान् सद्व्यवहारयुतः च भवति, तस्मिन् गुरोः आदरातिशयः सहजः। किन्तु भवान् राधारमणे यत् प्रीत्यतिशयं प्रदर्शयति तत् तु आश्चर्यकरम् एव" इति।

तदा सोमशेखरः मन्दहासपूर्वकम्

उक्तवान्– "गुरुकुले ये छात्ररूपेण सन्ति ते सर्वे मम प्रीतिपात्राणि एव। सर्वान् समानतया पश्यामि अहम्। राधारमणः तु शास्त्रतत्त्वावगतौ भवतां सर्वेषाम् अपेक्षया अपि समर्थतमः। तस्य लौकिकं ज्ञानं विशिष्टम् अस्ति। तस्य चिन्तनं सदापि युक्तियुक्तं भवति। अतः राधारमणे अधिकः आदरः सहजः। किन्तु एतेन का हानिः? कमपि छात्रम् अनादरेण न पश्यामि खलु अहम्?" इति।

"श्रीमन्! क्षन्तव्यः अहम्। राधारमणे यत् वैशिष्ट्यम् अस्ति इति भवता उक्तं तत् अस्माभिः अद्यावधि न दृष्टम्" इति उक्तवान् रामभद्रः।

"मम अपि स एव अनुभवः" इति उक्तवान् कृष्णदीक्षितः।

"तर्हि इदानीम् एव सर्वेषां योग्यता प्रमाणीकृता भवतु। अहम् एकां कथां वदामि। तस्यां कथायां काचित् समस्या भवति। यः समस्यायाः परिहारं वक्तुं शक्नोति स एव मेधावी इति ज्ञायते। सर्वान् अत्र आगन्तुं सूचयन्तु" इति उक्तवान् सोमशेखरः।

सर्वे छात्राः आगत्य गुरुं परितः वृक्षच्छायायाम् उपविष्टवन्तः। गुरुः एवं कथाम् उक्तवान्–

पर्णचन्द्रः अल्पे एव वयसि सूर्यपुरस्य राजा जातः। मातरि, पत्न्यां, प्राप्तवयस्कायां भगिन्यां च तस्य समानं प्रेम।

एकदा कश्चन योगी तस्य आस्थानम् आगत्य एकां गुलिकाम्, एकं हारम्, एकं पुष्पं



च दत्त्वा– "राजन्! भवति ये स्निह्यन्ति तेभ्यः एतानि ददातु। यः गुलिकां सेवते सः निश्चिन्ततया जीवितुं शक्नोति। तस्य अनारोग्यभीतिः अपि न भविष्यति। यः हारं धरति ततः भवतः हितं विशेषतः सिध्यति। यः पुष्पं धरति तस्य सौन्दर्यं द्विगुणितं भवति" इति उक्त्वा आशिषा अनुगृह्य ततः निर्गतवान्।

पूर्णचन्द्रस्य त्रयः प्रीतिपात्राणि सन्ति। योगिना दत्तानि वस्तूनि अपि त्रीणि। स्वनिमित्तं तेन किमपि न स्वीकरणीयम्। इदानीं समस्या नाम – कस्यै किं दातव्यम् इति।

एवं कथां समाप्य सोमशेखरः उक्तवान्– "पूर्णचन्द्रस्य समस्या का इति ज्ञाता खलु? समस्यायाः परिहारः भवद्भिः वक्तव्यः। कस्यै कस्य वस्तुनः दानम् उचितं भवेत् इति सूचनीयम्" इति।

राज्ञः समीपे स्थितेषु किं वस्तु, प्रीतिपात्रेषु कस्मै दातव्यम् इति रामभद्रः वा कृष्णदीक्षितः वा अन्ये छात्राः वा वक्तुं न शक्तवन्तः। सर्वे मौनम् उपविष्टवन्तः।

तदा राधारमणः उत्थाय एवम् उक्तवान्– "वृद्धा माता निश्चिन्ततया तिष्ठति चेत् राज्ञः अपि सन्तोषः। अतः योगिना दत्ता गुलिका तस्यै दातव्या। पत्न्या सह मधुरः सम्बन्धः अस्ति चेत् दाम्पत्यजीवनं सन्तोषकरं तिष्ठति इत्यतः हारः पत्न्यै दातव्यः। योगिना दत्तं पुष्पं या धरति तस्याः सौन्दर्यं द्विगुणितं भवति इत्यतः तत् अपूर्वं पुष्पं प्राप्तवयस्कायै भगिन्यै दातव्यम्। तदा योग्यः वरः तां परिणेतुम् अर्हति" इति।

राधारमणेन समस्यायाः परिहारः यः सूचितः सः सोमशेखरस्य अन्येषां विद्यार्थिनां च सम्मतः अभवत्। सर्वे हर्षोद्गारं कृतवन्तः।

रामभद्र-कृष्णदीक्षितयोः असूया अपि अपगता। सर्वैः सह तौ अपि निर्मलेन मनसा राधारमणम् अभिनन्दितवन्तः।





# चिदम्बररहस्यम्

सन्तानपुरे पूर्वं चिदम्बरः नाम कश्चन धनिकः आसीत्। सः परमकृपणः। किन्तु तस्य पत्न्याः स्वभावः तु साक्षात् विरुद्धम्। दाने, धार्मिककार्येषु, पुण्यप्रदेशु कार्येषु च तस्याः विशेषासक्तिः। अतः पतिपत्न्योः कलहः तदा तदा प्रचलति स्म।

कदाचित् ग्रामीणाः सर्वे सम्भूय उत्सवसन्दर्भे कथाकालक्षेपस्य व्यवस्थां कृतवन्तः। प्रतिगृहं धनं सङ्गृहीतवन्तः। धनसङ्ग्राहकाः यदा आगताः तदा चिदम्बरः– "मम एतादृशेषु कार्येषु सर्वथा आसक्तिः नास्ति" इति उक्त्वा धनम् अदत्त्वा एव तान् प्रेषितवान्।

एतत् श्रुत्वा तस्य पत्नी असमाधानेन उक्तवती– "भवान् धनं दातुं न इच्छति चेत् चिन्ता नास्ति। अहं तु पुत्रैः सह गच्छामि एव। भवता मया सह आगत्य मुक्तिप्रदानि त्रीणि वाक्यानि वा श्रोतव्यानि एव। एकाकिनी गच्छामि चेत् मया पुण्यं न प्राप्यते" इति।

पत्न्याः वचनं तिरस्कर्तुम् अशक्नुवन् चिदम्बरः– "अस्तु, आगच्छामि। किन्तु केवलं वचनत्रयं श्रुत्वा प्रत्यागच्छामि" इति अङ्गीकारं सूचितवान्।

वटवृक्षस्य अधः विशालः मण्डपः हरिकथार्थं कल्पितः आसीत्। असङ्ख्याः जनाः सम्मिलिताः आसन् तत्र। चिदम्बरः पुरुषाणां मध्ये उपविष्टवान्। तस्य पत्नी पुत्रैः सह स्त्रीणां मध्ये उपविष्टवती।

हरिकथाकारः पुष्पमालादिकं धृत्वा उपविश्य कथारम्भार्थं सन्नाहं कुर्वन् आसीत्। तदा ग्रामाधिकारी उत्थाय उक्तवान्– "आगन्तारः खलु आगताः? कस्यापि प्रतीक्षा करणीया नास्ति खलु?" इति।

"कार्यक्रमस्य प्रथमं वचनं श्रुतम्। इतः परं वचनद्वयं श्रुत्वा गृहं गच्छामि अहम्" इति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

आलोचितवान् चिदम्बरः।

जनाः बहवः पृष्ठतः स्थिताः आसन्। अतः ग्रामाधिकारी– "उपविशन्तु तावत्, उपविशन्तु" इति वदन् जनान् उपवेशितवान्। 'द्वितीयं वचनं मया श्रुतम्' इति भावितवान् चिदम्बरः।

जनाः तु आगच्छन्तः एव आसन्। स्थलाभावं दृष्ट्वा प्रतिगन्तुम् उद्युक्ताः केचन दृष्टाः ग्रामाधिकारिणा। सः पुनः उक्तवान्– "मा गच्छन्तु। तिष्ठन्तु तावत्। हरिदासः कथासूत्रेण भवतः सर्वान् बध्नाति" इति।

'मया त्रीणि वचनानि श्रोतव्यानि आसन्। एतावता त्रीणि श्रुतानि। अहं गच्छामि तावत्' इति आलोच्य चिदम्बरः उत्थाय गृहं गत्वा मञ्चे सुखेन सुप्तवान्।

'सर्वे हरिकथां श्रोतुं गताः स्युः' इति आलोच्य केचन चोराः स्नानगृहमार्गेण चिदम्बरस्य गृहं प्रविष्टवन्तः। तदा चिदम्बरस्य मुखात्– "आगन्तारः खलु आगताः? कस्यापि प्रतीक्षा करणीया नास्ति खलु?" इति स्वप्नालापः निर्गतः। एतत् श्रुत्वा भीताः चोराः 'यजमानः इतोऽपि निद्रां न प्राप्तवान्' इति आलोच्य तत्रैव स्थितवन्तः।

"उपविशन्तु तावत्, उपविशन्तु" इति सभायां श्रुतं द्वितीयं वचनं स्वप्नालापरूपेण चिदम्बरस्य मुखात् निर्गतम्।

'अस्माभिः अस्थाने आगतम्। इतः पलायनम् एव उचितम्' इति आलोच्य यत् लब्धं तत् स्वीकृत्य गन्तुम् उद्युक्ताः चोराः।

"मा गच्छन्तु। तिष्ठन्तु तावत्। ---सूत्रेण भवतः सर्वान् बध्नाति" इति तृतीयं वचनम् उच्चारितवान् चिदम्बरः।

'यजमानः अस्माकं ग्रहणार्थं विशिष्टं तन्त्रं किमपि कृतवान् अस्ति इति भाति' इति आलोच्य चोराः स्वीकृतानि वस्तूनि तत्रैव पातयित्वा ततः पलायितवन्तः।

चिदम्बरः स्वप्ने इतोऽपि पत्नीं समाश्वासयन् एव अस्ति। किन्तु चोराः कथं वा जानीयुः चिदम्बरवचनस्य रहस्यम्?



हिन्दुमहासागरे फेसिफिक्महासागरे च समुद्रे 'समुद्रशशः' इति नाम्ना आहूयमानाः जलचराः निवसन्ति। एतेषां कर्णौ श्मश्रूणि च शशस्य इव एव भवन्ति। अतः एतेषां तादृशं नाम। एकः समुद्रशशः ४७८,०००,००० अण्डानि स्थापयति।







अनिमोनीसदृशानाम् अतिलघूनां जन्तूनां शुष्काणाम् अस्थिपञ्जराणां समूहः एव प्रवालम् इति उच्यते। एतत् क्याल्शियमूमयं भवति।

## मरुभूमौ विचित्रः मूषकः

चेर्बोवाजातीयस्य मूषकस्य पृष्ठभागे स्थितौ पादौ अग्रिमपादयोः अपेक्षया चतुर्गुणितं दीर्घौ भवतः। आपादमुखं तस्य शरीरस्य दैर्घ्यं यावत् भवति ततोऽपि अधिकं दैर्घ्यं तस्य पुच्छस्य। एषः मूषकः एकेन प्रयत्नेन १० द्वादशाङ्गुलं यावत् उत्प्लवते। एवम् उत्प्लवनसमये समतोलनं यथा न नश्येत् तथा उपकरोति तदीयं पुच्छम्।



# कर्मकराः किं कुर्वन्तः सन्ति?

| | |
|---|---|
| विष्णुः - गौरि! कर्मकराः आगताः किम्? | Gowri, have the workers arrived? |
| गौरी - आम्। भीमः, लक्ष्मीः, वीरः च आगताः। | Yes, Bhima, Lakshmi and Vira have. |
| वि - गोहः न आगतः वा अद्य? | Goha hasn't? |
| गौ - अस्वास्थ्यम् इति वीरद्वारा वार्तां प्रेषितवान्। | He has sent word through Vira that he's ill. |
| वि - जानामि अहम्। अस्वास्थ्यं मिथ्या। अधिकवेतनस्य आशया अन्यस्य गृहस्य तात्कालिककार्यार्थं गतः स्यात् सः। अस्तु, एते किं कुर्वन्तः सन्ति? | I know what it is. His sickness is a lie. He would have gone elsewhere temporarily in the hope of earning a higher wage. OK, but what are these people doing? |
| गौ - लक्ष्मीः गोष्ठे अस्ति। भीमः तृणसङ्ग्रहार्थं गतः। वीरः केदारं गतः इति मन्ये। | Lakshmi is in the cowshed. Bhima has gone out to collect grass. And I think Vira has gone to the field. |
| वि - उद्यानस्य वृतिः पतिता अस्ति खलु? वृतिनिर्माणं प्रथमं समापनीयम्। अन्यथा धेनवः प्रविश्य उद्यानं नाशयेयुः। | The fence around the garden has collapsed, it appears? We have to re-erect it first of all. Otherwise stray cattle will get in and destroy the garden. |
| गौ - तर्हि भीमः यदा प्रत्यागच्छति तदा सः वृतिनिर्माणार्थं प्रेषणीयः। | So, when Bhima returns should **he** be sent to build it? |
| वि - एकाकी सः कर्तुं शक्नुयात् वा? | Can he do it all by himself? |
| गौ - तर्हि वीरः आह्वातव्यः। | Then we'll have to put Vira too on the job. |
| वि - मास्तु। केदारे बहूनि कार्याणि सन्ति। सः तत्रैव कार्यं करोतु। लक्ष्मीः एव गोष्ठकार्यं समाप्य भीमेन सह गच्छतु। ताम् अन्यत् कार्यं किमपि मा वदतु भवती। | Don't do that. There's a lot to be done in the field. Let him work there. After Lakshmi finishes work at the cowshed, let her go with Bhima. Don't ask her to do any work other than that. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां डिसेम्बर्-८९ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

* उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः -

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **क्रियतेऽयं सन्नाहः नैमित्तिकपूजार्थम्।**

द्वितीयचित्रम् - **कल्पितोऽयं निवेशः नित्यपूजार्थम्।**

प्रेषकः - **श्री वसन्त तम्मण्णनवर, मुदिमारुतिगल्लि, धारवाड-५८०००१, कर्णाटकम्।**




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अभिनन्दितवान् - | Congratulated | धारा - | Edge of knife |
| अभ्यर्थी - | Candidate | नवनीतविक्रेत्री - | Butter-seller (F) |
| अवगच्छति - | Understands | निर्बाधम् - | Without obstacle |
| अशनिः - | Thunderbolt | न्यायवादी - | Lawyer |
| अश्रुतपूर्वम् - | Unheard of before | पक्षवातः - | Paralysis |
| आञ्चलः - | End of a saree | पतङ्गः - | Moth |
| उत्पातः - | Unusual event | पितामही - | Father's mother |
| | foreboding calamity | पिहितवान् - | Closed |
| उरः - | Chest | प्रत्युत्पन्नमतिः - | Capable of quick |
| कूर्चः - | Brush | | decisions |
| क्षुण्णः - | Trodden | प्रस्थपात्रम् - | A measuring vessel |
| खलीनम् - | Bridle | भागिनेयः - | Sister's son |
| खेदयितुम् - | To cause disgust | याजमान्यम् - | Headship of a family |
| गलः - | Neck | वर्णः - | Colour |
| घटकः - | Mediator | विवर्णम् - | Dull |
| चपेटा - | Slap | शलभः - | Grasshopper |
| चितः - | Selected | शुण्डा - | Trunk of an elephant |
| छिनत्ति - | Cuts | शुश्रूषा - | Nursing |
| जल्पति - | Chitchats | सङ्ग्रहः - | Accumulation |
| तडित् - | Lightning | सीवनम् - | Stitch |
| तलम् - | Bottom | स्वप्नालापः - | Speaking while asleep |
| तुला - | Balance (Weighing instrument) | हस्तिपकः - | Mahout |

JUNIOR

# QUEST

*Where finding out is fun*

AIM NOW FOR

THE IDEAL TEACHER CONTEST!

## TEACHER'S DAY SPECIAL

Rush for the September issue of every child's favourite magazine!

PRICE RS 5/-

Sweet Talk With A Mango-Grove Parakeet

































nutrine

AAM-RAS

A terrific treat
with real mango inside ...
in a pack as colourful as
a parakeet.

Real Mango In Its Very True Colours

THE FINEST, WIDEST RANGE
nutrine
India's largest selling sweets

Visesh/NC/8940